Tanjore Sarasvati Mahal Series No. 176.

# Panchakalakriadeepah

*By*

[ Chaturvedasathakrathu
SRI SRINIVASA THATHACHARYA ]



015,1M88:9,1
MOT

The Tanjore Maharaja Serfoji's
Sarasvati Mahal Library, Thanjavur.

1980.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

RS: 44

Tanjore Sarasvati Mahal Series No. 176.

# Panchakalakriadeepah

*By*

**[ Chaturvedasathakrathu**
**SRI SRINIVASA THATHACHARYA ]**

*

*Edited with introduction in Sanskrit and Tamil*
*By*

NAVALPAKKAM
K. RAMANUJA THATHACHARIAR,
Nyayameemamsa, Siromani,
Vedavedanta Vidwan,
Ex-Sanskrit Pandit of the T. M. S. S. M. Library.

*

TANJORE MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.

1980 ] [ Price : Rs. 11—00

Panchakala Kriya Deepa
0176
T.M.S.S.M.L-2016
CC-0. Jangamwadi Math Collection. Digitized by eGangotri

First Edition : — 1980.

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math Varanasi
No ........6466...............

015,1M98;g,1
MOT

*Published by*

THE ADMINISTRATIVE COMMITTEE,
T. M. S. S. M. LIBRARY, THANJAVUR.

Published with the financial assistance from the Ministry of Education and Social Welfare, Govt. of India.

*Printed at*

The Sarasvati Mahal Library Press, Thanjavur.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तंजापुरी सरस्वतीमहालय ग्रन्थमालायाः पुष्पम् — १७६.

# ॥ पञ्चकालक्रियादीपः ॥

[ चतुर्वेदशतक्रतु श्री श्रीनिवासताताचार्यप्रणीतः ]


सरस्वतीमहालयभूतपूर्वसंस्कृतपण्डितेन

वेद-वेदान्तविद्वान् - न्यायमीमांसा शिरोमणि - बिरुदभाजा

नावल्पाक्कम्. कृ. रामानुजताताचार्येण

संशोध्य, संस्कृतद्राविडीप्रस्तावनासहितं परिष्कृत्य

सम्पादितः ।



तंजापुरी सरस्वतीमहाल् ग्रन्थालय निर्वाहकसमित्या

भारत सर्वकार धनसाहाय्येन प्रकाशितः

विजयतेतमाम् ।

मूल्यम् रू. ११-००.] [ क्रैस्तवाब्दाः १९८०


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# PREFACE

It is a common belief among the Hindus that if a particular deity is worshipped properly according to the set rules of worship, he or she will bestow the desired boons upon the devotee.

The present work, viz., 'PANCHAKALA KRIYA DEEPA' is a work on the worship of Lord Vishnu. It prescribes not only the modes of worship of Lord Vishnu, but the daily routine of religious and other activities to be performed by the men belonging to the Vishnu cult. This book is divided into five chapters called 'Paricchedas' prescribing some aspect or other of the worship of Lord Vishnu.

The editor of this work is Thiru N. K. Ramanujatatachariar, Siromani, Ex-Sanskrit Pandit of the T. M. S. S. M. Library. He had edited this work from our manuscripts deposit. He deserves our praise for his sincere attempt to edit the work well.


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

Our thanks are due to the Government Orient manuscript Library, Madras for providing us a transcribed copy of her manuscript of the said work (R. No. 1705) for reference and collation with our manuscript.

The Government of India has given the Library necessary grant to edit and publish this work. We are always grateful to them for this grant.

The entire staff of the Library are to be congratulated upon for their kind co-operation.

D. SUNDARESAN, I. A. S.,
*DISTRICT COLLECTOR & CHAIRMAN*
of the T. M. S. S. M. Library, Thanjavur.

Thanjavur,
28-7-1980.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# ॥ उपोद्घातः ॥

॥ श्रीमते श्रीनिवासततातार्यमहादेशिकाय नमः ॥

नत्वा देवं हयग्रीवं सर्ववागीश्वरेश्वरम् ।
पञ्चकालक्रियादीपभूमिका लिख्यतेऽधुना ॥

शतक्रतुचतुर्वेदिश्रीनिवासगुरूत्तमम् ।
वन्दे कुमारतातार्यतनयं तत्त्वविद्वरम् ॥

स भगवान् सर्वेश्वरः श्रियःपतिः परमकारुणिकाग्रेसरो नारायणः प्रजाः सृष्ट्वा तासां इष्टानिष्टप्राप्तिपरिहारोपायप्रतिपादकं प्रदीपतुल्यं शास्त्राख्यं प्रमाणमपिताभ्यां दत्तवान् । उक्तं ह्यभियुक्तैः

'हर्तुं तमः सदसतीच विवेक्तुमीशो
मानं प्रदीपमिव कारुणिको ददाति ।' इति ।

शास्त्रशब्देन वेदतदुपबृंहणरूपाः ग्रन्था गृह्यन्ते । मन्वादयः सर्वसाधारण्येन धर्ममुपबृंहयामासुः । येत्वेकान्तिनः परमैकान्तिनश्चच तेषामनुष्ठेया ये धर्माः एकायनाख्य वेदे प्रतिपादिताः तदुपबृंहणाय शास्त्रं प्रवर्तयामास । तस्मिन् पञ्चरात्रशास्त्रे अभिगमनम् उपादानम् इज्या

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वाध्यायः योगः इति पञ्चधा दिनं विभज्य भगवदाराधनकर्तव्यता प्रत्यपादि। ईदृशस्य भगवदाराधनस्य पञ्चकालप्रक्रियेति व्यपदेशोवरीवृत्यते। येतावत् मोक्षं तदितरफलानि च कामयमानाः भगवन्तमेव भजन्ते ते एकान्तिनः। ये तु भगवत्प्राप्तिरूप मोक्षमेवेच्छन्तः भगवन्तमेव भजन्ते ते परमैकान्तिनः। इदानींभगवन्तं प्रपन्नाः सर्वेऽपिश्री वैष्णवाः प्रायः परमैकान्तिनएव।

इहखलु संसारे अध्यात्मिकादितापत्रयसंतप्ताः बहवोजनाः संसाराद्विरक्ताः परमपुरुषार्थलक्षणमोक्षार्थमतीव यतन्त इति तावद्विदितचरमेव सर्वेषाम्। सचमोक्षः केनोपायेन प्राप्यत इति शङ्कायां, केचन विद्यामात्रेण, अपरेकेवलकर्मणा, अन्ये ज्ञानकर्मसमुच्चयादिति बहुधाविवदन्ते। अत्र विशिष्टाद्वैतिनस्तु कर्माङ्गकविद्ययामोक्षं इति तत्र तत्र प्रतिपादयन्तिस्म। विद्यां प्रति कर्मणः अङ्गत्वप्रकारस्तु 'धर्मेणपापमपनुदति' 'कषायेकर्मभिः पक्वे ततो ज्ञानं प्रवर्तते'। इत्यादि श्रुतिस्मृत्युक्तरित्या विद्याविरोधि पापनिरसनद्वारा। तच्च नित्यनैमित्तिकादिरूपं काम्यं च कर्मफलसङ्गं विना केवलभगवदाराधनवेषेणानुष्ठेयम्। 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानिच' 'त्यक्त्वा कर्मफलासङ्गं' इत्यादिगीतावचनात्। विद्याशब्देन भक्तिः प्रपत्तिश्चोच्येते।

तत्र भक्तेः कर्माङ्गकत्वं श्री भाष्यगीताभाष्यादिषु व्यक्तमुक्तम्। प्रपत्तेः कर्माङ्गकत्वाभावेऽपि भगवदाज्ञानुज्ञापरिपालनस्यावश्यं प्रपन्नैः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कर्तव्यत्वात् नित्यनैमित्तिकानि कर्माणि, फलत्यागेन काम्यकर्माणिच अवश्यं कर्तव्यानि। अनुगृहीतंहि निगमान्त महादेशिकैः —

'मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ
स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः।
परित्यागे सद्यः स्वपरविविधानर्थजननात्
अलङ्घ्यामामोक्षादनुसरति शास्त्रीयसरणिम् ॥'

इति। (रहस्यत्रयसारे शास्त्रीयनियमनाधिकारे) सन्ध्यावन्दनादिषु नित्यनैमित्तिककर्मसु भगवदाराधनं मुख्यतमम्। सन्ध्यावन्दनादीनामितर-कर्मणाम्

'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥'

इत्यादि वचनानुसारेण भगवदर्चनारूपत्वेनाकारेण प्राशस्त्ये सति साक्षात् भगवदाराधनस्य प्राशस्त्यं कैमुतिकन्यायसिद्धम्।

'स्नात्वा नित्यंशुचिःकुर्यात्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनंचैव समिदाधानमेवच ॥'

इति मनुवचनम्,

'ब्रह्मचारीगृहस्थो वा वानप्रस्थोऽथ भिक्षुकः।
केशवाराधनं हित्वा नैव याति परांगतिम् ॥'

इत्यानुशासनिकपर्वस्थवचनम्,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'यीमोहादथवालस्यादकृत्वादेवतार्चनम् ।
भुङ्क्ते स याति नरकान् सूकरेष्वपिजायते ॥'

इति व्यासस्मृतिवचनं चात्र भाव्यम् ॥

अयं भगवदाराधनक्रमः पाञ्चरात्राख्ये भगवच्छास्त्रे एकान्ति परमैकान्तिसाधारण्येनातिविपुलतया प्रतिपादितः । परमैकान्तिनांश्रीवैष्णवानां कर्तव्यस्य भगवदाराधनस्य क्रमं तत उद्धृत्य श्रीमद्भिः भाष्यकारपादैः नित्याख्योग्रन्थः संदृब्धः । उक्तं हि तत्र आदावेव –

'अथ परमैकान्तिनो भगवदाराधनप्रयोगं वक्ष्ये' इति ।

यद्यपिनित्ये पञ्चसु कालेषु कर्तव्यानि यानि अभिगमनोपादानेज्यास्वाध्याय-योगाख्यानि पञ्चकर्माणि तेषु इज्यैव प्रयोगबद्धतया प्रतिपादिता तथापि श्रीभाष्यकारशिष्यैः वङ्गिवंशेश्वरैः अभिगमनादिपञ्चकर्मणामनुष्ठानपद्धतिः कारिकारूपेण ग्रन्थेन प्रत्यपादीति महदिदं भागधेयं परमैकान्तिनाम् । अपिच अभिगमनादिपञ्चकर्मानुपरोधेन औपासनाग्निहोत्रदर्शपूर्णमासादिरूपाणि नित्यनैमित्तिककर्माण्यपि परमैकान्तिनामवश्यानुष्ठेयानि ।

उक्तं हि वङ्गिवंशेश्वरैः प्रातस्सन्ध्यानन्तरकर्तव्यप्रतिपादनसंदर्भे –

'ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवा यतिः ।
स्ववर्ण स्वाश्रमार्हेणविधिना श्रद्धयान्वितः ॥

समिदाज्यादिभिर्द्रव्यैः मन्त्रैरपि यथोदितैः ।
हुत्वाग्नीनग्निहोत्रादौ उक्तं कालमपिक्षिपन् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परा राधनरूपेण कृतेनैव स्वकर्मणा ।
कृते निष्कल्मषे शुद्धे स्वस्मिन् मनसि सुस्थिते ॥
लब्धाधिकारोदेवस्यध्यानार्चनजपादिषु । इति ।

काम्यकर्माण्यपि भगवदाराधनत्वेनानुष्ठितानि भगवत्प्रसादद्वारा मोक्षसाधनानि भवन्तीति –

'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥'

इति भगवद्गीतावचनेनावगम्यमानत्वात् सत्यवकाशे ज्योतिष्टोमादीन्यपि प्रपन्नैः कार्याणि । नित्यकर्माणि तु अग्निहोत्रादीनि नैव त्यक्तुं शक्यानीति गीतायामेव –

'नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥'

इत्यादिना स्पष्टोक्तम् । अत एव निगमान्तदेशिकैः श्रीपाञ्चरात्ररक्षायां दक्षव्यासादिदर्शितकालविभाग विरुद्धत्वात् तत्तत्कालानुष्ठेयश्रौतस्मार्तकर्म-जातावरुद्धत्वाच्च न पाञ्चकालिकाभिगमनादीनामवसर इत्याशङ्कामुत्थाप्य दक्षाद्युक्तकालविभागस्य पाञ्चरात्रोक्तस्य पञ्चधाकालविभागस्य चानतिभिन्नत्वं व्यासाद्युक्तनित्यनैमित्तिकधर्मजातेन पाञ्चरात्रोक्त शृङ्खलाबद्धाभिगमनादि-परमैकान्तिधर्मस्य समावेश संभवश्च प्रमाणोपपत्तिभ्यां प्रतिष्ठापिते ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवं चैतत्सिद्धं यत् परमैकान्तिभिः प्रपन्नैः श्रौतस्मार्तकर्मजातानुपरोधेन पञ्चरात्रोक्तवर्त्मना अभिगमनादिपञ्चकालक्रिया अपि फलसङ्गकर्तृत्वत्यागपूर्वकमवश्यमनुष्ठातव्या इति। कर्मजन्यं स्वर्गादिफलं मम न स्यात् इति फलत्यागः। फलसाधनतया मदीयमिदं कर्मेति या कर्मणि मदीयताबुद्धिः तस्याः त्यागः सङ्गत्यागः। सर्वेश्वरे कर्तृत्वानुसन्धानेन आत्मनः कर्तृत्वबुद्धेः त्यागः कर्तृत्वत्यागः। इत्थंरूपाणां श्रौतस्मार्तकर्मणां अभिगमनोपादानादीनां चानुष्ठानक्रमबोधनार्थं प्राक्तनैः आचार्यैः अनेके ग्रन्थाः कृता इति ज्ञायते। तेषु चतुर्वेदशतक्रतुकुमारताताचार्य तनूद्भवैः शतक्रतुचतुर्वेदि श्रीनिवासाचार्यैः कृतस्य पञ्चकालक्रियादीपस्यास्त्यनितरसाधारणं महत्वम्। यतो हि आह्निकनाम्ना नामान्तरेण च अन्यैराचार्यैः कृतेषु ग्रन्थेषु अभिगमनादीनां पञ्चकर्मणामनुष्ठान क्रम एव सुविशदं प्रतिपादितोऽस्ति। अग्निहोत्रदर्शपूर्णमासादि श्रौतकर्मणां परमैकान्तिभिः अनुष्ठातव्यः क्रमः न तत्र प्रत्यपाद्यत। अत एव श्रीवैष्णवाः एतादृशग्रन्थालाभात् एतत्प्रक्रियायाः विच्छेदेन यथावदनवगमाच्च प्रायो न श्रौतकर्माण्यनुतिष्ठन्तीति वस्तुस्थितिरियम्। अस्य पञ्चकालक्रियादीपस्य इदंप्रथमतया प्रकाशनेन परमैकान्तिनः श्रीवैष्णवाः अन्ये च नितरामुपकृता भविष्यन्तीति द्रढीयान् अस्माकं विश्वासः।

## ॥ एतद्ग्रन्थप्रतिपाद्याः विषयाः ॥

अत्र पञ्चभिः परिच्छेदैः अभिगमनं, उपादानं, इज्या, स्वाध्यायः, योगः, इति पञ्चकर्माणि प्रतिपाद्यन्ते। तत्र अभिगमनाख्ये प्रथमे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परिच्छेदे – ब्राह्ममुहूर्ते उत्थायकर्तव्यं ध्यानप्रकारं अभिगमनसंकल्पं मलमूत्रोत्सर्जनशौचादिविधिं आचमनविधिं दन्तधावनविधिं स्नानविधिं वस्त्रधारणप्रकारं ऊर्ध्वपुण्ड्रधारणक्रमं प्रातस्सन्ध्यावन्दनक्रमं आधारशक्ति तर्पणक्रमं ब्रह्मयज्ञक्रमं च प्रत्यपीपदत् । ततः श्रौतस्मार्ताग्निकार्यविधिं प्रत्यपादयत् । तत्प्रसङ्गात् पशुहिंसायुक्तेषु श्रौतकर्मसु परमैकान्तिनां उपरिचरादीनां प्रवृत्यदर्शनात् कथं तेषां करणीयत्वम् ? प्रपन्नानां परमैकान्तिनां श्रौतकर्मफलानामनपेक्षितत्वाच्च तेषां श्रौतकर्मसु प्रवृत्तिरयुक्तेत्याक्षेपं कृत्वा विस्तरेण भगवदाराधनरूपतया श्रौतकर्मणामनुष्ठानं न विरुध्यते इति पिष्ट पशुखण्डन पूर्वकं निरूपयांबभूव । महाभारतस्थोपरिचरोपाख्यानतात्पर्यं च सम्यक् व्यवृणोत् । ततः अग्निहोत्र-दर्शपूर्णमास-व्रतोपायन-पशुबन्धसोमयाग-महाग्निचयनानां परमैकान्तिप्रपन्नैरनुष्ठेयं क्रमं न्यबध्नात् । ततो महापुरुष-ध्यानप्रकारमौपासनक्रमं च प्रतिपादयतिस्म । यतीनामपि पूर्वमाहिताग्नीनां दहनसंस्कारोऽस्तीति प्रसङ्गात् न्यरूपयत् ।

अत्रत्यः पिष्टपशुखण्डनपूर्वकं प्रत्यक्षपशुयागसमर्थनप्रकारः पिष्टपशोः कार्तयुगधर्मनिष्ठाधिकारिविशेषविषयत्वनिरूपण प्रकारः यागोपयुक्तानां मन्त्राणां अष्टाक्षरमन्त्र पूर्वकं प्रयोगप्रकारः श्रीवैष्णवानां अग्निहोत्रदर्शपूर्णमाससोम-यागाद्यनुष्ठानप्रकारश्च विदुषां प्रमोदाय तत्तत्कर्म अनुतिष्ठासूनां श्रीवैष्णवानां महते उपकाराय च कल्पेतेति निश्चप्रचम् ।

ततः उपादानाख्ये द्वितीये परिच्छेदे – अह्नो द्वितीयभागे संप्राप्ते उपादानसंकल्पं पूजोपकरणद्रव्यसंपादनप्रकारं दर्भसंग्रहणविधिं पुष्प-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तुलस्यारणक्रम त्याज्योपादेयपुष्पविवेकं अन्येषां पात्र-आसन-ध्वज-गन्धद्रव्य-भूषणादीनामुपकरणानां च संभरणप्रकारं विशदमुवाच ।

ततः तृतीये इज्याख्ये परिछेदे – इज्यार्थ संकल्पं माध्याह्निकस्नानविधिं माध्याह्निकसन्ध्याविधिं चोक्त्वा ततः भगवत्सन्निधौ शरणागतिप्रकारं इज्यार्थविशेषसंकल्पं प्राणायामविधिंचोक्त्वा विस्तरेण भूतशुद्धिप्रकारः उक्तः । अत्रोक्तः भूतशुद्धिप्रकारः अतिविलक्षणः विस्तृतश्चास्ति । तत्त्वन्यासप्रकारोऽपि विलक्षणो विस्तृतश्च । ततः अष्टाक्षरमहामन्त्रस्यन्यासप्रकारः जपप्रकारश्चोक्तः । ततः द्वय – चरमश्लोक – द्वादशाक्षर – षडक्षर – विष्णुगायत्री – श्रीमन्त्र – पुरुषसूक्त – श्रीसूक्त – सालग्राममन्त्राणां न्यासध्यानजपप्रकारान् प्रतिपादयति स्म । ग्रन्थान्तरेषु एते विषयादुर्लभाः । ततः षडासनोपेतभगवदाराधनप्रयोगं विन्यास्थत् । अयं प्रयोगोऽपि विस्तृतोविलक्षणश्चास्ते । ततो विष्वक्सेनाराधनक्रमं अवोचत् । ततो वैष्णवहोमविधिं भोजनविधिं च समगृह्णात् ।

ततः स्वाध्यायाख्ये चतुर्थे परिच्छेदे – स्वाध्यायार्थसंकल्पः भगवत्प्रीणन स्वचित्तरञ्जकेतिहास पुराणस्तोत्रनिगमान्तद्वयव्यापकमन्त्रादीनां श्रवण-मननप्रवचनजपादिविधिः लोहितायति भास्करे सायं सन्ध्योपासनविधिश्च प्रतिपादितः ।

ततः पञ्चमे योगाख्ये परिच्छेदे - परमात्मध्यानप्रकारः स्वापादि-प्रकारश्च उक्तः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ ग्रन्थनाम्नः औचित्यम् ॥

पाञ्चरात्रोक्तरीत्या पञ्चकालकर्तव्यानां अभिगमनोपादानेज्यास्वाध्याय-योगाख्य पञ्चकर्मणां प्रकाशकत्वात् अस्य ग्रन्थस्य पञ्चकालक्रियादीप इति नाम। नित्याख्यः ग्रन्थः यद्यपि भाष्यकारैः कृतः तथापि स इज्याप्रयोग-मात्रविश्रान्तः। वङ्गिवंशेश्वरकृतः ग्रन्थः पञ्चकालक्रियाप्रतिपादकोऽपि कारिकारूपः। नारायणार्यप्रभृतिग्रन्थः अधुनादुर्लभः। तत्र श्रौतस्मार्त-कर्मणां अनुष्ठानविधिर्नास्ति। अतः नित्य - वङ्गिवंशेश्वरकारिका - श्रीपाञ्च-रात्ररक्षादिग्रन्थानवलम्ब्य श्रुतिस्मृतिपाञ्चरात्रसंहितादिग्रन्थांश्च आधृत्य अपेक्षितश्रौतस्मार्तादिकर्माणि अभिगमनादीनि च प्रतिपादयन्ननुपमोऽयं ग्रन्थः अत्यन्तमुपकारकोभवति। चिन्नैय्यन् आह्निकम् इत्यपि अस्य ग्रन्थस्य प्रिसद्धिः।

---

## ॥ ग्रन्थशैली ॥

अस्य ग्रन्थस्य शैली प्रमाणोपपन्ना सरला मधुमयफणिति-संदब्धा च। अपेक्षितस्थले श्रुतिस्मृतिपञ्चरात्रादिवचनोपन्यास पूर्वकं विषयोपपादनप्रक्रिया विद्वन्मनांसि रञ्जयति। आचमन - आधारशक्ति-

b

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तर्पणादिषु बहुषु विषयेषु अत्रोक्ता प्रक्रिया इदानींतनानुष्ठानविलक्षणा वर्तते ।

## ॥ ग्रन्थकर्तृवैभवम् ॥

अस्य ग्रन्थस्य रचयितारः शतक्रतुचतुर्वेदिश्रीनिवासाचार्याः । एतेषां पितरः नावल्पाक्काग्रहाराभिजनाः कुमारताताचार्याः । ते च अधीतसकलवेदतदङ्गाः षड्दर्शनीवल्लभाः अनुष्ठितक्रतुशताः अत एव चतुर्वेदः शतक्रतुः इति बिरुदभाजनभूताः तञ्जापुरीय नायकवंश्यराजानां अच्युतनायकरघुनाथनायकविजयराघवनायकानां मन्त्रिणः राजगुरवश्च-व्यराजन्त । तेषां अय्याकुमारताताचार्याणां राजगुरूणां चरितं कालं चाधिकृत्य सरस्वतीमहाल्ग्रन्थालयप्रकाशितस्य तत्कृतपारिजातनाटकस्य भूमिकायां N. S. देवनाथाचार्यैः विस्तृततया विवेचितं निर्णीतं च । कुमारताताचार्याणां कालः क्रैस्तवीय षोडशशताब्द्याः अन्तिमभागः सप्तदशशताब्द्याः आद्यभागश्च । अण्णामलै विश्वविद्यालयीयविमर्शसंचिकायाः नवमेऽङ्के नायकराजान् अधिकृत्य वृद्धगिरीशेन लिखिते निबन्धे एवमुल्लि-खितम् अस्ति यत् - अय्याकुमारतातदेशिकानां मुख्यो जीवितभागः (1575 A. D. to 1630 A. D.) एते राजकुटुम्बस्य गुरवः । द्वितीयवेंकटस्य राज्ञः (1630 A. D.) पट्टाभिषेकमकारयन् । तिरुमल

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्री वेंकटाचलपतेः आनन्दनिलयविमानस्य काञ्चीपुर्यां वरदराजालये कल्याण-कोटिपुण्यकोटिविमानयोश्च निर्माणे मुख्याप्रेरका आसन् इति ।

विजयराघवनायकेन (*1633* AD to *1673*) कालिकेन वैष्णवमते अतिशयितां भक्तिं श्रद्धां च वहता अय्या कुमारताताचार्याः नितरां सत्कृताः मन्त्रित्वेन राजगुरुत्वेन च पुरस्कृताः । कुमारताताचार्यपादुकां आन्दोलिकायां निक्षिप्य छत्रचामरादिभिः परिवारैश्च सह वीथीभ्रमणं अकारयत् इति प्रसिद्धिः ।

एतेषां कुमारताताचार्याणां सप्त पुत्राः । तेषांज्येष्ठः नीलमेघा-चार्याभिधानः । तस्यैव पुत्रपौत्रनप्तृपरंपरागताः इदानीं नावल्पाक्काख्ये-ग्रामे निवसन्ति । रघुनाथाख्यस्य तृतीयपुत्रस्य वंशजाः तिरुच्चे रैक्षेत्रादिषु वसन्ति । वेंकटाचार्याभिख्यस्य चरमपुत्रस्य वंशजाः कुम्भघोणे पाट्टराचार्य-वीथ्यां निवसन्ति । श्रीनिवासाचार्यनाम्नः पुत्रस्य वंशोत्पन्नाः त्वार् (दक्षिणद्वारका) क्षेत्रे वसन्ति ।

प्रकृतग्रन्थकर्ता श्रीनिवासाचार्योऽप्ययमेवेति संभाव्यते । वेङ्कटाचार्यैः कृते अय्या कुमारतातदेशिकवैभवप्रकाशिकाख्ये ग्रन्थे कुमारताताचार्यः स्वयं भगवद्गुणगोचरान् बहून् ग्रन्थानकरोत्, सर्वशास्त्र विचक्षणैः स्वपुत्रैश्च बहून् ग्रन्थानचीकरदित्युक्त्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'विशिष्टाद्वैतसरणिं पञ्चकालप्रदीपिकाम्'

इति चावदत्। तेन अय्या कुमारताताचार्यैः अयं ग्रन्थः स्वपुत्र श्रीनिवासाचार्यद्वारा कारित इत्यवगम्यते। विजयराघवनायकमनःकान्तामणि श्रीरङ्गाजम्मविरचिते 'उषापरिणयमु' इति नामके तेलुगुपद्यकाव्ये —

'चेलुवु मीरु शतक्रतु श्रीनिवास
तातगुरुवर्युनकु वन्दनमो नर्तु'

इति श्रीकुमारताताचार्यकुमारस्य शतक्रतु श्रीनिवासाचार्यस्य बहुमानपूर्वकं संकीर्तनमस्ति। तस्मात् पञ्चकालक्रियादीपकर्तुः कालः सप्तदशशतकाद्यभागः स्यादिति निर्णीयते। किं वहुना! एतद्ग्रन्थकर्तृणां श्रीनिवासाचार्याणां शिष्यैः सच्चरित्रसुधानामकस्य स्मृतिसंग्रहस्य प्रणेतृभिः श्रीनैध्रुववंशमुक्ताफलैः सकलधर्मशास्त्रपारावारपारदृश्वभिः श्रीवीरराघवाचार्यैः तद्ग्रन्थारम्भे —

"शतक्रतुविधिस्तव्यं चतुर्वेदविहारिणम्।
श्रीनिवासगुरुं सीतानायकं च नमाम्यहम्॥

श्रीमच्छ्रीनिधिदेशिकस्य चतुराम्नयस्य दिव्याज्ञया
कर्तुं सच्चरिताब्धिमध्वरशतानुष्ठाननिष्ठाजुषः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मीमांसाद्वयवल्लभश्च बुधराट् श्री श्रीनिवासस्सुधीः
सम्यक्साहसकारिणो मम तरिः स्यात्
कृष्णविद्वन्मणिः ॥

चतुराम्नायषट्सूत्रीरहस्यार्थोपदेशिनः ।
श्रीवासदेशिकस्यान्ते मेधा कस्य न जृम्भते ॥"

इति प्रकृतपञ्चकालक्रियादीपकर्तॄन् चतुराम्नाय श्रीनिवासाचार्यान् स्तुवन्तः एतेषां ज्ञानानुष्ठानवैभवं प्राचीकशन्। इतोऽधिकं जिज्ञासमानाः पारिजातनाटकभूमिकां दृष्ट्वा अवगच्छन्तु इति प्रार्थये ।

---

॥ एतद्ग्रन्थमातृकाः ॥

निबन्धोऽयं आस्तिकाग्रेसरणां विदुषां प्रीत्यावहो भविष्यति । ग्रन्थस्यास्य प्रकाशेन विविधानां विवादग्रस्तविषयाणां स्पष्टीकरणं भविता । अस्य मातृकाः (5) पञ्च तञ्जापुरविराजमानसरस्वतीमहाल् भाण्डागारे उपलभ्यन्ते । सर्वा अप्येताः तालपत्रात्मिकाः ग्रन्थलिपिमय्यः । तासां सरस्वतीमहाल् मातृकालयसंप्रदायसिद्धः अङ्कव्यपदेशः —

1. (No. B. 9329 a — D 18599) 67 पत्राणि
परिमाणं 17 × ½ इंच् पूर्णा.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

2. (No. B. 9330 — D. 18600) 17 × ½ इंच्

3. (No. B. 9321 a — D. 18601) अपूर्णा

4. (No. B. 9321 p — D. 18602) ,,

5. (No. B. 9321 c — D. 18003) ,,

तासां मध्ये आद्यैव मातृका मुद्रापणे प्राधान्येन अवलम्बिता । अस्त्यन्या काचन मातृका तालकोशमयी अस्मदाचार्यवर्याणां तिरुमलचतुर्वेद शतक्रतु अय्यादेवनाथताताचार्यस्वामिनां सन्निधे । सा तु शुद्धा । तञ्जापुरकोशे यास्त्रुटयः ताः एतन्मातृकासाहाय्येन पूरिताः । तादृशस्थलेषु [ ] एतादृशंचिह्नं निवेशितम् । एवं मद्रराजकीयहस्तलिखितपुस्तकभाण्डागार-स्थायाः R 1705 संख्याङ्किताया: मातृकायाः प्रतिलिपीकृतः कोशोऽपि एतद्ग्रन्थशोधनार्थं उपयुक्तः ।

इत्थं महता श्रमेण संशोधितेऽप्यत्र ग्रन्थे मनुष्यमात्रसुलभान-वधानादिना अशुद्धयः अवर्जनीयतया समापतन् । ताः विद्वांसः शोधयित्वा नूतनग्रन्थलाभेन सन्तुष्येयुरिति विश्वसिमि ।

अस्य ग्रन्थस्य मुद्रापणमवश्यं कार्यमिति असकृत् मां प्रचोदितवद्भ्यः वेदतदङ्गमीमांसादिशास्त्रनिष्णातेभ्यः श्रौतस्मार्तपञ्चकालक्रियापरायणेभ्यः अनुष्ठितसोमयागेभ्यः तिरुमलै चतर्वेदशतक्रतु - नावल्पाक्कं सोमयाजि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नारायणताताचार्यस्वमिपादेभ्यः (वैकुण्ठवासिभ्यः) मम वेदगुरुभ्यः प्रप्रथमं सनमोवाकं कार्तज्ञ्यं निवेदयामि।

ततः स्वसविधस्थमातृकाप्रदानेन एतद्ग्रन्थस्थविषमस्थलादिशोधनेन चोपकृतवद्भ्यः अस्माकं न्यायमीमांसावेदान्तशास्त्राचार्येभ्यः सकलशास्त्रपारंगतेभ्यः आजानशुद्धेभ्यः अनुष्ठानपरेभ्यः तिरुमलै चतुर्वेदशतक्रतु नावल्पाक्कं अय्या देवनाथताताचार्यस्वामि चरणेभ्यः वन्दनानि समर्पयामि।

ततः एतद्ग्रन्थप्रकाशने अपेक्षितं साहाय्यमाचरितवद्भ्यः सुहृद्वरेभ्यः तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठे प्राध्यापकपदमधितिष्ठद्भ्यः शास्त्ररत्नाकरेभ्यः एन्. एस् रामानुजताताचार्येभ्यः हार्दिकीं कृतज्ञतां प्रकाशयामि।

ततः एतद्ग्रन्थसम्पादने प्रथमप्रेरकाणां भूतपूर्वसरस्वतीमहाल् कोशालयाधिकारिवर्गाणां अद्य मुद्राप्य प्रकाशितवतां इदानींतनाधिकारिवर्गाणां अस्य ग्रन्थस्य प्रूफ्शोधनं कृतवतां सरस्वतीमहाल् पण्डितानां च हार्दं कार्तज्ञ्यं प्रकटयामि।

नैसर्गिकात् पुरुषबुद्धिप्रमादात्, तत्र तत्र अक्षरलोपाश्च मन्ये कतिचन दोषाः लब्धास्पदाभवेयुः। सहृदयवरेण्यैर्विद्वज्जनतल्लजैः क्षन्तव्योऽयमन्तुरित्यभ्यर्थये इति शम्॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शतक्रतुचतुर्वेदतातार्यतनुजन्मने ।

श्रीशैलवंशजनुषे श्रीनिवासाय मङ्गलम् ॥

श्रीमते श्रीनिवासतातार्यमहागुरवे नमः ।

विद्वज्जनविधेयः

नावल्पाक्कम्. कृ. रामानुजताताचार्यः

(संपादकः)

भूतपूर्वं संस्कृतपण्डितः, सरस्वतीमहाल्, तंजानूर्

नावल्पाक्कम्,

22—11—80

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ஸ்ரீ:

# முன்னுரை

பகவான் ஸர்வேச்வரன் லக்ஷ்மீபதியான நாராயணன் மக்களைப் படைத்து அவர்களுக்கு விரும்பிய பொருட்களை அடைவதற்கும், அநிஷ்டங்களை நீக்குவதற்கும் வழியைத் தெரிவிக்கும் [1]சாஸ்த்திரம் என்னும் ப்ரமாணத்தையும் கற்பித்துக்கொடுத்தார்.

மனு, கௌதமர், யாஜ்ஞ்யவல்க்யர் முதலிய மஹரிஷிகள் எல்லா வர்ணங்களிலும் தம்தம் வர்ணங்களில் செய்யவேண்டிய தர்மங்களைத் தம்தம் ஸ்ம்ருதிகளில் ஆங்காங்கு விரிவாகக் கூறியுள்ளார்கள்.

[2]ஏகாந்திகளாலும், [3]பரமைகாந்திகளாலும் அனுஷ்டிக்கப்படவேண்டிய தர்மங்கள் "ஏகாயனம்" என்னும் வேதத்தில் சுருக்கமாகக் கூறப்பட்டுள்ளன. அதில் சொல்லப்பட்ட செய்திகளை செயல்முறையில் ஸௌகர்யமாக அறிந்துகொண்டு செய்வதற்காக ஸ்ரீ பகவான் பாஞ்சராத்ரம் என்னும் சாஸ்திரத்தைத் தானே அருளிச் செய்தார். அப்பாஞ்சராத்ர சாஸ்திரத்தில் அபிகமனம், உபாதானம், இஜ்யா, ஸ்வாத்யாயம், யோகம் என்று

---

குறிப்பு :- 1. சாஸ்த்திரம் என்பதால் வேதம் அதின் உபப்ரும்மணம் இவை எல்லாம் கூறப்படுகின்றது. 2. மோக்ஷத்தையும் மற்றும் ஸ்வர்க்கம், பசு புத்ரன் முதலிய பலன்களை உத்தேசித்து பகவான் ஒருவனையே உபாயமாக எவர்கள் அடைகிறார்களோ அவர்கள் ஏகாந்திகள் எனப்படுகிறார்கள். 3. எவர்கள் பகவத் ப்ராப்தி ரூபமான மோக்ஷம் ஒன்றையே விரும்பி பகவான் ஒருவனையே சரணமாக அடைகின்றார்களோ அவர்கள் பரமைகாந்திகள் எனச் சொல்லப்படுகிறார்கள்.



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ஐந்துவிதமாக தினத்தைப் பிரித்து அந்தந்த காலங்களில் பகவத்பூஜை செய்யவேண்டியமுறை கூறப்பட்டுள்ளது. இம்மாதிரியான பகவத்பூஜைக்கு "பஞ்சகாலப்ரக்ரியா" என்று பெயர் விளங்கிற்று,

இந்த ஸம்ஸாரத்தில் (5) ஆத்யாத்மிகம், முதலிய தாபங்களான் தபிக்கின்ற பலமக்கள் ஸம்ஸாரத்தில் நின்று விரக்தர்களாய் சிறந்த உறுதிப்பொருளான மோட்சத்தை (வீட்டை) அடையவேண்டுமென்று மிகவும் முயற்சி செய்கின்றார்கள் என்பது அனைவராலும் அறியப்பட்டதே.

அம்மோக்ஷமானது எந்த வழியால் அடையப்படுகிறது என்கிற ஆசங்கை (கேள்வி) ஏற்படும்போது சிலர் அறிவால் மட்டும் என்றும், மற்றோர்கள் செயல்மாத்ரத்தினுலே என்றும், ஒரு சிலர் அறிவு செயல் ஆகிய இரண்டும் சேர்ந்து இவ்விரண்டினுலும் என்றும், பலவிதமாக சொற்போரிடுகின்றனர். அவற்றில் விசிஷ்டாத்வைதிகள் செயலை உதவியாக உடைய வித்யையினுல் மோக்ஷம் அடையப்படுகிறது என்று ஆங்காங்கு விரிவாகக்கூறியுள்ளார்கள்.

இங்கு வித்யை என்பதால் பக்தி, ப்ரபத்தி, இவ்விரண்டும் சொல்லப்படுகின்றன. அவற்றில் பக்தி என்கிற உபாயம் வ்யாஸாதிகளைப்போன்ற சிறந்த அறிவுடைய அதிகாரிகளால் கையாளத்தக்கது, ப்ரபத்தி என்பது அற்ப அறிவுடையவர்கள் விஷயம் என்றும் நிர்ணயிக்கப்பட்டுள்ளது. அவ்வறிவைக் குறித்து கர்மாவானது "धर्मेण पापमपनुदति" ("தர்மேணபாபமபநுததி") "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" ("கஷாயேகர்மபி: பக்வே ததோஜ்ஞானம் ப்ரவர்த்ததே") என்று ச்ருதி ஸ்ம்ருதிகளில் சொல்லுகிறபடி வித்யைக்கு விரோதியான பாபத்தைப் போக்கடித்து அவ்வழியாக அங்கமாக (உதவியாக) ஆகிறது, பக்திக்குக் கர்மாவானது அங்கம் என்பது பகவத்கீதை முதலிய ப்ரமாண ஸித்தம். ப்ரபத்திக்குச் செயல் அங்கமாக இராமல் போனுலும் இறைவனின் கட்டளையான வேத

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

நூல்களில் கூறியவற்றையும் அனுஜ்ஞை யென்னும் விளக்கு ஏற்றல் முதலிய செயல்களையும் காத்தல் ப்ரபன்னர்களால் அவச்யம் செய்யவேண்டியதானபடியால் கர்மாக்களை அனுஷ்டித்தாகவேண்டும்.

கர்மாவானது ச்ரௌதம், ஸ்மார்த்தம் என்று இரு வகைப்படும், அவற்றில் அக்னிஹோத்ரம், தர்சபூர்ண மாஸம், ஸோமயாகம், முதலியவைகள் ச்ரௌதகர்மாக்கள் எனச் சொல்லப்படுகின்றன, ஔபாஸனம், வைச்வதேவம் முதலியவைகளை ஸ்மார்த்தகர்மாக்கள் என்று கூறுகிறார்கள். அக் கர்மாக்கள் ஒவ்வொன்றும் மறுபடியும் நித்யம், நைமித்திகம், காம்யம் என மூன்று வகைப்படும், அவற்றில் ஸந்தியாவந்தனம் முதலியவற்றை 'நித்யம்' என்றும், சூரிய சந்திர க்ரஹணகால விசேஷங்களில் செய்யப்படும் ஸ்னானம் தர்ப்பணம், தானம் முதலியவைகளை நைமித்திகம் என்றும் புத்ரகாமேஷ்டி முதலியவைகளை காம்யம் என்றும் கூறுகிறார்கள். இவை அனைத்தும் வேறு பலன்களை விரும்பாமல் பகவத் ப்ரீதிமாத்ரத்தை உத்தேசித்து பகவதாராதன வேஷமாகச் செய்யவேண்டும்.

இவ்விஷயத்தில்

"एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च"

"त्यक्त्वा कर्मफलासङ्गं"

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्" ॥

"ஏதாந்யபிது கர்மாணி ஸங்கங்கம் த்யக்த்வா பலாநி ச।"

"த்யக்த்வா கர்மபலாஸங்கம்,"

"யத்கரோஷி யதச்னஸி யஜ்ஜுஹோஷி ததாஸியத்।
யத்தபஸ்யஸி கௌந்தேய தத்குருஷ்வ மதர்ப்பணம்" ॥

–இவை முதலிய கீதாவசனங்கள் ப்ரமாணம்.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

பாஞ்சராத்ரம் என்னும் பகவச்சாஸ்திரதில் பகவதாராதனக்ரமம் ரொம்பவும் விஸ்தாரமாகச் சொல்லப்பட்டுள்ளது. அதில் சொல்லப்படும் முக்கியசெய்திகளையும் மற்றும் பாத்மஸம்ஹிதை முதலான க்ரந்தங்களில் கூறிய செய்திகளையும் அடிப்படையாகக்கொண்டுதிருவஷ்டாக்ஷரம் முதலிய மந்த்ரங்களினுல் பகவானை ஆராதிக்கும் (விஷயத்தை) முறையை (ஸ்ரீ பாஷ்யகாரர்) இராமானுஜர் 'நித்யம்' என்னும் நூலில் விரிவாகக் கூறியுள்ளார்.

இந்நித்யம் என்னும் நூல் ஸ்ரீ வைஷ்ணவ ஆஹ்நிகக்ரந்தங்களில் முதன்முதலாக எற்பட்டது. இதுவே பிற்காலத்தில் ஏற்பட்ட பல ஆந்ஹிக க்ரந்தங்களுக்கு அடிப்படையாக விளங்குகிறது. இந்நூலில் இஜ்யா ப்ரயோகம் மட்டுமே விரிவாகச் சொல்லப்பட்டுள்ளது. மற்ற விஷயங்கள் கூறப்படவில்லை. இதன்பிறகு வங்கிபுரத்துநம்பிகள் ச்லோக ரூபமாக ஐந்து காலங்களில் செய்யவேண்டிய செயல்களைப்பற்றி ஒரு நூல் இயற்றியுள்ளார். மற்றும் ஆந்ஹிகம் என்கிற பெயராலும், பாஞ்சராத்ரரக்ஷை, (ரக்ஷை) முதலிய பெயர்களாலும், கி. பி. 15-வது நூற்றுண்டிற்கு முன்பு பல பெரியோர்கள் நித்ய கர்மானுஷ்டானங்களைப் பற்றிப் பல க்ரந்தங்களைப் பண்ணி உள்ளார்கள். ஆனுல் அவைகளில் பரமைகாந்திகள் ச்ரௌதகர்மாக்களை அனுஷ்டிக்கும் முறை சொல்லப்படவில்லை. அபிகமனம் முதலிய ஐந்து கர்மாக்களின் செயல் முறையே சொல்லப்பட்டுள்ளது. ஆதலால்தான் பரமைகாந்திகளான ஸ்ரீவைஷ்ணவர்கள் இம்மாதிரியான க்ரந்தம் கிடைக்காததால் ச்ரௌதகர்மாக்களை பகவதாராதன ரூபமாக அனுஷ்டிக்கும் முறை விட்டுப்போனதால் ஸரியானபடி அறியாமையால் அனேகமாக ச்ரௌதகர்மாக்களை அனுஷ்டிக்க ஸௌகரியக்குறைவு உள்ளவர்களாக ஆகிருர்கள் என்பது உண்மைநிலை. பொதுவாக எல்லோருக்கும் தர்சபூர்ணமாஸ, ஸோமயாகம் முதலிய ச்ரௌதகர்மாக்களைச் செய்வதற்கு பல ருத்விக்குகளின் உதவி, வேதம், சாஸ்திரம் முதலிய பல பிரிவுகளில் ஆழ்ந்த

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

அறிவு முதலியவைகள் அவச்யமானபடியால் எல்லோராலும் செய்வதற்குக் கடினமாக இருந்தபடியால் அவைகளில் மக்களுக்கு இருந்த ஈடுபாடு குறையலாயிற்று. இம்மாதிரி யான நிலையில் இம்மஹாநுபவர் லோகோபகாரத்திருஷ்டி யினால் ச்ரௌதகர்மாக்களைப் பகவதாராதன ரூபமாகச் செய்யும் முறையில் ஜ்ஞானமும் ரொம்ப ஆவச்யகமானதால் விரிவான ஆந்ஹிகத்தின் தேவையை உணர்ந்து ஸ்ரீ இராமா னுஜர் முதலிய முன்னோர்களால் இயற்றப்பட்ட 'நித்யம்' 'வங்கிவம்சகாரிகை' 'ஸ்ரீ பாஞ்சராத்ரரக்ஷை' போன்ற நூல்களை ஆதாரமாகக்கொண்டு கி. பி. 17-ம் நூற்றாண்டில் பரமைகாந்தியான ஒவ்வொரு ஸ்ரீவைஷ்ணவனும் தினமும் காலை எழுவது முதல் இரவு துயில் கொள்ளும்வரை ஐந்து காலங்களில் பகவதாராதனவேஷமாகச் செய்யவேண்டிய 'அக்னிஹோத்ரம், தர்சபூர்ணமாஸம், ஸோமயாகம் முதலிய ச்ரௌதகர்மானுஷ்டானத்திற்கு தடையிராமல் அபிகமனம், உபதானம், இஜ்யை, ஸ்வாத்யாயம், யோகம் இவைகளின் அனுஷ்டான ப்ரக்ரியையை '**பஞ்சகாலக்ரியா தீபம்**" என்கிற இந்நூலில் ஐந்து பரிச்சேதங்களாகப் பிரித்து விரிவாக எழுதினர்.

## நூல் குறிப்பு

### 1. அபிகமனம்

ப்ராம்ம முகூர்த்தம் என்று சொல்லப்படும் விடியற் காலையில் துயில் எழுந்து செய்யவேண்டிய இறைவனை நினைக்கும் முறையை முதலில் கூறுகிறார், பிறகு அபிகமன ஸங்கற்பம், சௌசக்ரமம், (சுத்தி) பல் துலக்குவது, ஸ்னானம் செய்வது, ஆடையுடுப்பது, திருமண்காப்பு அணிந்து கொள்வது, காலை ஸந்த்யாவந்தனம், ஆதார சக்தி தர்ப்பணம், ப்ரம்மயஜ்ஞம், முதலியவைசெய்யும் முறைகளை இம்முதல் பரிச்சேதத்தில் விரிவாகக் கூறியுள்ளார்.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

பிறகு இந்நூலில் அக்னிஹோத்ரம் முதலிய ச்ரெளத கர்மாக்களை பண்ணும் முறையைக் கூறும்பொழுது 'பசு ஹிம்ஸை' முதலியவைகளுடன் கூடியதான ச்ரெளதகர்மாக்களில் பரமைகாந்திகளான வைஷ்ணவர்கள் ஈடுபாடு கொள்வது முறையானதா ? பகவானிடத்தில் மட்டுமே ஈடுபாடு இருக்கவேண்டிய பரமைகாந்தியான ப்ரபன்னர்களுக்கு ச்ரெளத கர்மாக்களினால் ஏற்படுகிற பலன் தேவையானதா ? இவ்வாறான வினாக்களுக்கு எந்தவிதமான பலனையும் எதிர்பார்க்காமல் பகவானை ஆராதிப்பதே முக்யமான குறிக்கோள் என்னும் முறையில் ச்ரெளத கர்மாக்களை செய்வதில் தவறு ஏதும் இல்லை என்பது விரிவாகக் கூறப்பட்டுள்ளது. மகா பாரதத்தில் உள்ள 'உபரிசரோபாக்யானத்தின்' உட்கருத்தையும் இவ்விடத்தில் கூறியுள்ளார்.

—

அடுத்து அக்னிஹோத்ரம், தர்சபூர்ணமாஸம், பசுபந்தம், ஸோமயாகம் போன்ற கர்மாக்களை பரமைகாந்திகள் அனுஷ்டிக்கும் முறையைக் கூறியுள்ளார். இவ்விடத்தில் அக்னிஹோத்ர ஸோம யாகாதிகளின் மந்திரங்களைச் சொல்லும்பொழுது திருவஷ்டாக்ஷரம் போன்ற வைஷ்ணவ மந்திரங்களுடன் சேர்த்து த்யானம் செய்யும் முறையை நன்கு சொல்லியுள்ளார். கீழ்க்கண்ட விஷயங்கள் **அபிகமனம்** என்னும் இம்முதல் பரிச்சேதத்தில் சொல்லப்பட்டுள்ளன.

## 2. உபாதானம்

அடுத்து **உபாதானம்** எனப்படும் இவ்விரண்டாவது பரிச்சேதத்தில் பகவானுடைய பூஜைக்குத் தேவையான துளஸீ, புஷ்பம் முதலியவைகளைக் கொண்டுவரும் முறையைக்கூறியுள்ளார். இங்கு பகவத்பூஜைக்கு எந்தெந்த மலர்கள் கொள்ளத்தக்கவை. எந்தெந்த மலர்கள் விலக்கத்தக்கவை என்பதையும் கூறியுள்ளார். தர்பம், ஸமித் இவைகளைக் கொண்டுவரும் முறையும் கூறப்பட்டுள்ளது.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## 3. இஜ்யா

இப்பரிச்சேதத்தில் பகவானை ஆராதிக்கும் முறையை ஒரு சாராருக்கு மட்டும்தான் என்பது இல்லாமல் அனைவரும் அனுஷ்டித்து போற்றக்கூடிய வகையில் விரிவாகவும் விளக்கமாகவும் கூறியுள்ளார். முதலில் மாத்யாஹ்நிக ஸ்னானம், மாத்யாஹ்நிக ஸந்த்யா, முதலியவைகளைச்செய்யும் முறையைக்கூறி பின்பு இறைவன் பக்கலில் சரணாகதி செய்யும் முறையையும் இஜ்யைக்கான விசேஷ ஸங்கற்பம், ப்ராணாயாமமுறை முதலியவற்றைக் கூறுகிறார். இங்கு 'பூதசுத்திக்ரமம்' என்று சொல்லப்படும் தன் பூத உடலை பகவானுக்குத் திருவாராதனம் செய்வதற்கு ஏற்றதாகச் சுத்தி செய்துகொள்ளும் முறை விரிவாகவும் மற்ற நூல்களில் கூறி இருப்பதைக் காட்டிலும் சிறந்ததாகவும் கூறப்பட்டுள்ளது, பின்பு 'திருவஷ்டாக்ஷரம்' எனப்படும் மூல மந்திரத்தை அங்கந்யாஸம் கரந்யாஸம் முதலியவைகளுடன் செய்யும் முறை கூறப்பட்டுள்ளது, மேலும் த்வயம். சரம ச்லோகம், த்வாதசாக்ஷரம், ஷடக்ஷரம், விஷ்ணுகாயத்ரீ, ஸ்ரீமந்த்ரம், புருஷஸூக்தம், ஸ்ரீ ஸூக்தம், ஸாளக்ராம மந்த்ரம் முதலியவற்றை அங்கந்யாஸ கரந்யாஸங்களுடன் செய்யும் முறையை அழகாக விவரித்துள்ளார். இச்செய்திகளை மற்ற நூல்களில் காண்பதரிது.

பின்பு ஆறு ஆஸனங்களுடன் பகவதாராதனம் செய்யும் முறையை விரிவாக எழுதியுள்ளார். வைஷ்ணவ ஹோமவிதியும் விஷ்வக்ஸேனாராதனமும் போஜனவிதியும் கூறப்பட்டுள்ளன.

## 4. ஸ்வாத்யாயம்

ஸ்வாத்யாயம் என்னும் இந்நான்காவது பரிச்சேதத்தில் ஸ்வாத்யாய ஸங்கல்பம், பகவத்ப்ரீதிகரமானதன் மனத்தை மகிழ்விக்கும் இதிஹாஸ, புராண, ஸ்தோத்ரங்களின் சிறப்பும் இரண்டு வேதாந்தங்கள், திருவஷ்டாக்ஷரம் முதலிய பகவந்மந்த்ரங்களின் ச்ரவண, மநன, ப்ரவசன,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ஜபங்களின் விதியும். சூரியன் அஸ்தமனமாகும்போது செய்யத்தக்க ஸாயம் ஸந்த்யோபாஸன முறையும் கூறப் பட்டுள்ளன.

## 5. யோகம்

ஐந்தாவது பரிச்சேதத்தில் துயில் கொள்வதற்குமுன் பரமாத்மாவை த்யானம் செய்யும் ப்ரகாரமும் தூங்குவது முதலிய முறையும் சொல்லப்பட்டுள்ளது.

## நூலின் பெயர்ப் பொருத்தம்

பாஞ்சராத்ரத்தில் சொன்னபடி ஐந்து காலங்களில் செய்யவேண்டிய அபிகமனம், உபாதானம், இஜ்யா, ஸ்வாத்யாயம், யோகம், என்னும் ஐந்து கர்மாக்களின் அனுஷ்டான முறையை விரிவாகக் கூறுவதால் இக்ரந்தத் திற்கு 'பஞ்சகாலக்ரியா தீப:' என்று பெயர் இட்டார். இக்ரந்தத்திற்கே சின்னய்யன் ஆஹ்நிகம் என்னும் மற்றொரு பெயரும் உண்டு.

## நூலின் அமைப்பு

இந்நூலானது அனேகப்ரமாணங்களை ஆதாரமாகக் கொண்டு எளிய வெகு அழகான சொற்றொடர்களினால் தொகுக்கப்பட்டுள்ளது. ஆங்காங்கு வேண்டிய இடங் களில் தேவையான ச்ருதிஸ்ம்ருதி வாக்கியங்களை எடுத்துக் காட்டல் முதலிய செய்திகளை விரிவாகக் கூறியுள்ள முறை யானது மிகச்சிறந்தது.

## நூலாசிரியரும், அவருடைய வைபவமும்

இந்நூலாசிரியர் சதுர்வேத சதக்கரது ஸ்ரீநிவாஸ தாதாசாரியர் என்பவர். இவர் அய்யா குமார தாதா தேசிகன் என்று உலகப்ரஸித்தமான பண்டிதரின் ஐந்தாவது

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

குமாரர், நூலாசிரியரின் தந்தை அய்யாகுமார தாத தேசிகன் என்பவர் எல்லா வேதங்களையும் ஆறுதர்சனங் களையும் நன்குகற்றவரும் கற்பித்தவரும் ஆவார். வேதங்கள், ஸ்ம்ருதிகள் முதலியவற்றில் கூறியபடி நூற்றுக்கும் மேற் பட்ட வேள்விகளை முறைப்படி அனுஷ்டித்துள்ளார். ஆதலால்தான் சதுர்வேத சதக்ரது என்னும் பிருதத்தி னுல் அலங்கரிக்கப்பட்டார். மேலும் தஞ்சை நாயக வம்சத்து அரசர்களான அச்யுத நாயகர், ரகுநாத நாயகர், விஜயராகவ நாயகர்களின் அமைச்சராகவும், ராஜகுரு வாகவும் விளங்கியவர். இவருடைய சரிதம் தஞ்சை ஸரஸ்வதிமஹால் நூல்நிலயத்தில் ஏற்கனவே வெளியிடப் பட்ட **'பாரிஜாத நாடகம்'** என்னும் நூலில் முகவுரையில் விவரமாக எழுதப்பட்டுள்ளது,

அய்யா குமாரதாததேசிகன் 15-ஆம் நூற்றுண்டின் பிற்பகுதியிலிருந்து 16-ஆம் நூற்றுண்டின் முற்பகுதி வரை வாழ்ந்தார். அண்ணுமலை யூனிவர்ஸிடி ரிஸர்ச் ஜர்னலில் Vol. No. 9 Article by வ்ருத்தகிரீசரால் கீழ்க்கண்டவாறு குறிப்பிடப்பட்டுள்ளது அய்யா குமாரதாத தேசிகனைப் பற்றி.

அய்யா குமாரதாத தேசிகனின் முக்யமான வாழ்க்கைப் பகுதி *1575* A. D. to *1630* A. D. வரை என்று நூன்முக ஆதரங்களினுல் ஏற்படுகிறது. இவர் அரச குடும்பத்திற்கு ராஜகுருவாக விளங்கினுர். இவர் இரண்டாம் வேங்கடன் *1630* A. D. என்பவருக்கு முடிசூட்டுவித்தார். மற்றும் திருமலை வேங்கடேச்வரப் பெருமாள் கோவிலில் உள்ள ஆனந்த நிலய விமானம், காஞ்சிபுரத்தில் உள்ள கல்யாண கோடி, புண்ய கோடி விமானங்களுக்கு வழிகாட்டியாக இருந்துள்ளார்.

(Refer Tirupathi Devasthanam's Epigraphical Report by S. Subramanya Sastri PP 312—313)

d

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

விஜயராகவநாயகர் (1633A to 1673) என்னும் தஞ்சை மன்னர் வைணவ சமயத்தில் மிகுந்த ஈடுபாடு கொண்டவ ராக விளங்கினர். குமாரதாததேசிகன் அவரால் மிகவும் போற்றி கௌரவிக்கப்பட்டார். அம்மன்னனின் அமைச்ச ர்ாகவும், ஆசானுகவும் விளங்கினர். மன்னர் குமாரதாத தேசிகனின் பாதுகைகளை பல்லக்கில் வைத்து நகரத்தைச் சுற்றிப் பரிவாரங்களுடன் நடந்து வருவார்.

இக் குமாரதாத தேசிகனுக்கு ஏழு பிள்ளைகள், அவர்களில் முதல்வர் நீலமேகதாதாசாரியர் என்பவர், அவருடைய புத்ரவம்ச பரம்பரையில் ஜநித்தவர்கள் இப்போது நாவல்பாக்கம் என்னும் க்ராமத்தில் வஸித்து வருகிறார்கள். அவருடைய கடைசி குமாரரான வேங்கடா சாரியருடைய வம்சத்தில் உதித்தவர்கள் கும்பகோணத்தில் பாட்ராசாரியர் தெருவில் வசித்து வருகிறார்கள். ரகுநாதாசாரியர் என்கிற மூன்றுவது குமாரரின் வம்சத்தில் உண்டானவர்கள் திருச்சேறை என்னும் க்ஷேத்ரத்தில் வசித்துவருகிறார்கள். ஐந்தாவது குமாரரான ஸ்ரீனிவாஸ தாதாசாரியரின் வம்சத்தில் தோன்றியவர்கள் த்வார் (தக்ஷிணத்வாரகை) என்னுமிடத்தில் வஸித்து வருகிறாகள். ப்ரக்ருத நூலாசிரியரான ஸ்ரீனிவாஸ தாதாசாரியரும் அவரே (ஐந்தாவது குமாரரே) எனக் கருதப்படுகிறது.

வேங்கடாசாரியர் என்பவரால் இயற்றப்பட்ட 'அய்யா குமாரதாததேசிக வைபவ ப்ரகாசிகா' என்னும் நூலில் குமாரதாத தேசிகன் பகவத்குணத்தைப் பற்றிய அனேக நூல்களை தான் பண்ணினர். எல்லா நூல்களையும் அறிந்த தன் புத்ரர்களைக் கொண்டும் பல நூல்களைச் செய்து வைத்தார், என்று சொல்லிவிட்டுப் பிறகு,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'विशिष्टाद्वैतसरणिं पञ्चकालप्रदीपिकाम्'

விசிஷ்டாத்வைதஸரணிம் பஞ்சகாலப்ரதீபிகாம், (44 to 50 ச்லோகங்களில்) என்று கூறுகிறுர். இதனுல் அய்யா குமாரதாததேசிகனுல் இந்நூலானது ஸ்ரீனிவாஸ தாதாசாரியர் என்னும் தன் குமாரனின் வாயிலாகப்பண்ணி வைக்கப்பட்டது என அறியப்படுகிறது.

விஜயராகவ நாயகரின் காலத்தில் கவிமித்ரி ஸ்ரீரங்காஜம்மா என்னும் பெண்புலவர் 'உஷாபரிணயம்' என்னும் தன்னுடைய தெலுங்கு காவ்யத்தில்,

'चेलुवु मीरु शतक्रतुश्रीनिवास
तातगुरुवर्युनुकु वन्दनमोनर्तु'

('செலுவு மீரு சதக்ரது ஸ்ரீனிவாஸதாத
குருவர்யுனுகு வந்தனமோநர்து')

என்று சபையில் விற்றிருந்த சதக்ரது ஸ்ரீனிவாஸ தாதாசாரியருக்கு வணக்கங்களைத் தெரிவித்துக்கொள்கிருள்.

மேலும் இந்நூலாசிரியரான ஸ்ரீனிவாஸ தாதாசாரியரின் சீடரும் 'ஸச்சரித்ர ஸுதாநிதி:' என்னும் நூலை இயற்றியவரும் ஸகல தர்மசாஸ்திரங்களைக் கசடறக் கற்றவருமான வீரராகவாசாரியரால் தன்னுடைய நூல் ஆரம்பத்தில்

"शतक्रतुविधिस्तव्यं चतुर्वेदविहारिणम् ।
श्रीनिवासगुरुं सीतानायकं च नमाम्यहम् ॥

"श्रीमच्छ्रीनिधिदेशिकस्य चतुराम्नायस्य दिव्याज्ञया
कर्तुं सच्चरिताब्धिमध्वरशतानुष्ठाजुषः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मीमांसाद्वयवल्लभश्च बुधरा श्रीश्रीनिवासस्सुधीः
सम्यक् साहसकारिणो ममतरिः स्यात्कृष्णविद्वन्मणिः " ॥

"चतुराम्नायषट्सूत्री रहस्यार्थोपदेशिनः ।
श्रीवासदेशिकस्यान्ते मेधा कस्य न जृम्भते " ॥

(சதக்ரதுவிதிஸ்தவ்யம் சதுர்வேத விஹாரிணம் ।
ஸ்ரீனிவாஸகுரும் ஸீதாநாயகம் ச நமாம்யஹம் ॥

ஸ்ரீமத்ஸ்ரீநிதி தேசிகஸ்ய சதுராம்நாயஸ்ய திவ்யாஜ்ஞயா
கர்தும் ஸச்சரிதாப்தி மத்வரசதாநுஷ்டான நிஷ்டாஜுஷ: ।

மீமாம்ஸாத்வயவல்லபச்சபுதராட் ஸ்ரீஸ்ரீநிவாஸஸ்ஸுதீ:
ஸம்யக்ஸாஹஸகாரிணோ மமதரி: ஸ்யாத்க்ருஷ்ணவித்வந்
மணி: ॥

சதுராம்நாய ஷட்ஸூத்ரீ ரஹஸ்யார்த்தோபதேசிந: ।
ஸ்ரீவாஸதேசிகஸ்யாந்தே மேதாகஸ்ய நஜ்ரும்பதே ॥)"

என்று பஞ்சகாலக்ரியாதீப நூலாசிரியரான ஸ்ரீனிவாஸ தாதாசாரியரைத் துதிசெய்து அவருடைய ஜ்ஞான அனுஷ்டானங்களின் வைபவத்தையும் ப்ரகாசப்படுத்தி யுள்ளார், ஆகையால் பஞ்சகாலக்ரியாதீப க்ரந்த கர்த்தா வின் காலம் கி. பி. 17ஆம் நூற்றூண்டின் முதற்பகுதி என நிர்ணயிக்கப்படுகிறது. இதற்குமேல் விரிவாக அறிய ஆவலுள்ளவர்கள் 'பாரிஜாத நாடக' முகவுரையிலிருந்து அறிந்துகொள்ளவேணுமாய் கேட்டுக்கொள்கிறேன்.

பஞ்சகாலக்ரியாதீபத்தின் மூலமான சுவடிகள் தஞ்சை ஸரஸ்வதி மஹால் லைப்ரரியில் உள்ள சுவடிகள் 5. ஷெ சுவடிகளின் நெம்பர்களும், மற்ற விவரங்களும்.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

1 No. (B. 9329a, D. 18599) இஞ்ச் 17 x ½ பூர்ணம்
2. (B. 9330, D. 18600) ,, ,, ,,
3. (B. 9321a. D. 18601) அபூர்ணம்
4. (B. 9321p. D. 18602) ,,
5. (B. 9321 c D. 18603) ,,

என்னும் ஸங்கேதத்தில் க்ரந்த எழுத்தில் பஞ்சகாலக்ரியா தீபத்தின் மூலமான ஓலைச்சுவடிகள் உள்ளன. அவற்றில் முதல் நெம்பரில் உள்ள ஓலைச்சுவடியானது இந்நூல் அச்சிடுவதற்கு முக்கியமாக எடுத்துக்கொள்ளப் பட்டது. எல்லாச் சுவடிகளும் ரொம்ப ஜீர்ணமாகவும் நடுவில் துண்டித்தும் நொடிந்தும் உள்ளன. தவிர பல குற்றங்கள் காணப்படுகின்றன. நடுவில் பதங்களும் சில இடங்களில் வாக்கியங்களும் விட்டுப்போய்விட்டன. அவ்விடங்களில் எங்களுடைய ஆசார்யரான திருமலை சதுர்வேத சதக்ரது, மஹாவித்வான் அய்யா தேவநாததாசாரியர் ஸ்வாமியிடம் இருந்த சுத்தமான ஓலைச்சுவடியைப் பார்த்து அவ்விடங்கள் பூர்த்தி செய்யப்பட்டன. அந்த இடங்களில் [ ] என்னும் அடையாளம் கொடுக்கப்பட்டுள்ளது.

இவ்வாறு சென்னை ஓரியண்டல் மேனஸ்க்ரிப்ட்ஸ் லைப்ரரியில் உள்ள R. 1705 No. சுவடியைப் பார்த்து காபி செய்யப்பட்ட நூலும் இந்நூலின் சோதனத்திற்காக உபயோகிக்கப்பட்டது. இவ்வாறு ரொம்ப ச்ரமப்பட்டு சோதித்தபோதிலும் இந்நூலில் பொதுவாக மனிதர்களுக்கு உண்டாகும் அநவதானத்தினல் பல குற்றங்கள் அவர்ஜனீயமாக ஏற்பட்டுள்ளன. அவைகளை வித்வான்கள்

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

சோதனம் பண்ணிக்கொண்டு புதியநூல் பெற்றதினுல் மகிழ்ச்சியை அடைவார்கள் என நம்புகிறேன்.

இந்நூலை அச்சிடுவதற்கு உதவியாக தன்னிடத்திலிருந்த ஓலைச்சுவடியைக்கொடுத்தும், இந்நூலில் கடினமான இடங்களில் சோதித்துக்கொடுத்தும் உபகரித்த எங்களுடைய ந்யாய, மீமாம்ஸா, வேதாந்த சாஸ்த்ர ஆசாரியரும், ஸகல சாஸ்த்ரங்களையும் கசடறக்கற்றவரும், கற்பித்தவரும், ஆஜானசுத்தரும், அனுஷ்டானபரருமான திருமலை, சதுர்வேதசதக்ரது, மகாவித்வான், நாவல்பாக்கம், அய்யா ஸ்ரீ தேவநாத தாதாசாரியஸ்வாமியின் திருவடிகளில் அநேக வந்தனங்களை ஸமர்ப்பிக்கிறேன்.

மேலும் இந்நூலை வெளியிட எனக்கு அனுமதியளித்து ஆதரவு காட்டிய ஸரஸ்வதி மகால் நிர்வாக அதிகாரி பெ. பார்சுவநாதன் அவர்களுக்கும், நூலகக் காப்பாளர் திரு. சிவராஜ தீக்ஷதர் அவர்களுக்கும், மற்றும் ஷ்டி மகால் கமிட்டி மெம்பர்களுக்கும் நன்றி செலுத்தக் கடமைப் பட்டுள்ளேன். மேலும் இந்நூலின் அச்சுப்பிரதியை பரிசோதித்து (ப்ரூப்)க்கொடுத்த பண்டிதருக்கும் என் நன்றி உரித்தாகுக.

மற்ற ஆஹ்நிகநூல்களைக்காட்டிலும் இந்நூலில் காணப்பட்ட விசேஷ விஷயங்களின் குறிப்பு கீழ்க்கண்டவாறு :

1. ஆசமனப்ரகாரத்தில் மாறுதல்கள்.

2. யஜ்ஞவராஹத்யானம்.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

3. மஹாபுருஷத்யானம்.

4. ப்ரபன்னர்களும் ச்ரௌதகர்மாக்களை அவச்யம் பண்ணவேண்டும் என்பது.

5. ஸந்யாஸிகள் (ஆஹிதாக்னி) ஸம்ஸ்கார விஷயம் (வைஷ்ணவ வைசேஷிக பித்ருமேதப்ரயோகதீப:).

6. இஜ்யா (ஆராதன) காலத்தில் மூலமந்த்ர ஜபம் செய்யும் ப்ரகரணத்தில் மூலமந்திரத்துடன் த்வயம், சரமச்லோகம். வாஸுதேவத்வாதசாக்ஷரம்: ஸ்ரீவிஷ்ணு ஷடக்ஷரம் முதலிய எல்லா மந்த்ரங்களின் ஜப முறையை அங்கந்யாஸ கரந்யாஸ த்யான ச்லோக பூர்வகம் விசதமாகக் கூறியுள்ளார்.

7. திருவாராதன மந்த்ர புஷ்ப காலத்தில் 14 வித்யைகளை யும் அனுஸந்திக்கும் முறை.

8. ஆஸனங்கள் ஸமர்ப்பிப்பதில் வரிசைக்கிரமத்தில் மாறுபாடு.

இம்மாதிரியான பல விசேஷங்கள் இந்நூலில் சொல்லப்பட்டிருக்கிறது.

பூஜையில் அவரவர்க்குச் சிறிது வித்யாஸமிருக்கலாம். ஆனால் பூஜை என்பது எல்லாருக்கும் உண்டு. இங்கு வைஷ்ணவ ஸம்ப்ரதாயத்தை அனுஸரித்து சிறிது விரிவாகக் கூறப்பட்டுள்ளதேயன்றி வேறில்லை. வைஷ்ணவ ஸம்ப்ரதாயத்தில்கூட எந்த உட்பிரிவினரும், ஸ்மார்த்தர் களும், மாத்வர்களும்கூட யாரும் இதை அனுஸரிக்கலாம். அவ்வளவு பொதுவான விஷயங்களே எழுதப்பட்டுள்ளன.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

இந்நூலில் கூறப்பட்டுள்ள விஷயங்கள் அத்தனையும் வேதங்களிலும் அதனை அனுசரித்து மஹரிஷிகளால் ஸ்ம்ருதிகளிலும், தர்ம சாஸ்த்ரங்களிலும் உபதேசிக்கப்பட்டதேயன்றி ஒரு சிறிதும் கல்பனையன்று.

இவ்வாறு விசேஷ விஷயங்களைக் கூறுகிற அபூர்வமான இந்நூலானது ஆஸ்திகாக்ரேஸரர்களான வித்வான்களுக்கு மிகவும் விருப்பமாக இருக்கும். முதன் முதலாக இதை அச்சிட்டு வெளியிடுவதால் பரமைகாந்திகளான ஸ்ரீவைஷ்ணவர்களுக்கும் இதரர்களுக்கும் மிகவும் உபகாரம் ஏற்படும் என்றும் நம்புகிறோம்.

ந்யாய மீமாம்ஸா சிரோமணி,
வேத வேதாந்த வித்வான்
**ஸம்பாதகன்.**

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## ॥ विषयानुक्रमणिका ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| | विषयः | | पृष्ठसंख्या |
|---|---|---|---|



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| | विषयः | | पृष्ठसंख्या |
|---|---|---|---|



॥ शुभमस्तु ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# पञ्चकालक्रियादीपे प्रमाणतया उपात्तानां ग्रन्थानां सूची

1 अथर्ववेदः

2 आपस्तम्बसूत्रम्

3 उपनिषदः

4 ऋग्वेदः

5 गीताभाष्यम्

6 तात्पर्यचन्द्रिका

7 पाञ्चरात्रागमाः

8 पाञ्चरात्ररक्षा

9 बोधायनधर्मप्रश्नः

10 बोधायनधर्मसूत्रम्

11 मनुस्मृतिः

12 महाभारतम्

13 यजुर्वेदः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

14 विष्णुपुराणम्

15 वैखानससूत्रम्

16 वैष्णववैशेषिकपितृमेधप्रयोगदीपः

17 श्रीभाष्यम्

18 हारीतस्मृतिः

॥ श्रीरस्तु ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रीमते हयग्रीवाय नमः

# ॥ पञ्चकालक्रियादीपः ॥

श्रीनिवासाचार्यविरचितः

---

[ वन्दे जगद्गुरुं श्रीशं यस्य चाज्ञा श्रुतिस्मृती । ]
यस्य लीला जगज्जन्मस्थितिसंहरणादयः ॥

प्रणमाम्यस्मदाचार्यान् तद्गुरून् भाष्यकृन्मुखान् ।
यैरकण्टकिता मार्गा वैदिकाः पाञ्चरात्रिकाः ॥

कुमारताताचार्यं सदाचारपदं सदा ।
वेदान्ताचार्यसिद्धान्तविजयध्वजमाश्रये ॥

शतक्रतुचतुर्वेदिश्रीनिवासार्यदेशिकः ।
पञ्चकालक्रियादीपं कुरुते विदुषां मुदे ॥

[ तत्र नित्यस्य भगवत्समाराधनकर्मणः । ]
यागध्यानादिरूपस्य प्रयोगो ह्यभिधीयते ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अथ परमैकान्ती ब्राह्ममु[हूर्ताभिधेये रात्र्याः पश्चिमयामे वि]श्रमार्थं यामद्वयकृतां निद्रां परित्यज्य समाहितमनाः [सत्वस्थः प्रसन्नधीः हरिर्हरिरिति सप्तकृत्व उच्चार्य हरिमेव चिन्तय]न्नुत्थाय पादौ प्रक्षाल्याचम्य तस्मिन्नेव शयने स[मासीनो हरिरोमिति निर्दिश्य सत्वस्थः प्रसन्नधीः पूर्वयामानुसंहित-मन्त्रेण प्रतिसंहितयोगः अन्तः]करणचित्रभित्तिगतं विचित्रशुभाश्रयं ध्येयं परिपूर्णं भगवन्तं नारायणं निद्रातमोऽन्तरितमपि सा[त्विकध्यानरूपप्रदीप-प्रकाशेन सम्यगवलोक्य त]त्तत्कालोचितं भगवन्मन्त्रजपं वेदाभ्यासं च यथा-बलमाचरेत्। ततो गुरुपरम्परां ध्[यात्वा"

प्रातः स्मरामि दधिघोषविधूतनिद्रं
निद्रावसा]नरमणीयमुखारविन्दम्।
हृद्याभिरामवपुषं नयनाभिरामं
उन्निद्रपद्मनयनं नवनीत[चोरम्॥

प्रातर्भजामि भजतामभयंकरं तं
प्राक्सर्वजन्म]कृतपापभयापनुत्यै।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्र[घोर-
शोक[1]प्रणाशकरणोद्धृतशङ्खचक्रः॥]

---

१ 'प्रणाशमकरोत्' इति पाठान्तरम्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रातः स्मरामि भवतापमहार्तिशान्त्यै
नारायणं गरुडवाहनमञ्जनाभम् ।
ग्राहाभिभूतमदवारगमुक्ति[हेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥

इत्यनु[सन्धाय "ब्रह्माण" मित्यादि हर्यष्टकं पठित्वा भूतभाविदशाविशेषपरामर्शाय कृताकृतप्रत्यवेक्षणाय च नियतेन्द्रि[यः समाहितः अतिक्रान्तानन्तं कालं] निरर्थकमवलोक्य परमं निर्वेदं गत्वा गतजल-सेतुबन्धाभिलाषतुल्यानुतापप्रशमनपूर्वकं सात्विक [धृत्यात्मकागामिकाल शक्यकै]ङ्कर्यं

"इत ऊर्ध्वमहन्तावत् यावज्जीवं श्रियःश्रियः ।
पदयोरर्चनं कर्तुं यतमानस्समाहितः ॥

अभि[गच्छन् हरिं प्रातः पश्चाद्द्रव्याणि चार्ज]यन् ।
अर्चयंश्च ततो देवं ततो मन्त्रान् जपन्नपि ॥

[ध्यायन्नपि परं देवं कालेषूक्तेषु पञ्चसु ।
वर्तमानस्सदा चैवं] पाञ्चकालिकवर्त्मना ॥

स्वार्जितैर्गन्धपुष्पाद्यैः शुभैश्शक्त्यनुरूपतः ।
[आराधयन् हरिं भक्त्या गमयिष्यामि वासरान्" ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति निश्चित्य

"एतत्क्रियाविरोधीनि प्राचीनान्यशु] भानि मे ।
कर्माण्यनन्तान्यच्छेद्यानि अनादीन्यशुचीनि च ॥

त्वयैव कृपया देवो विनाश्यास्मन्मनोरथान् ।
[पूरयत्विति संप्रार्थ्य मन्त्रमेतमुदीरयेत् ॥

त्वय्याराधनकामोऽयं व्रतं चरितुमिच्छति ।
सङ्कल्पसिद्ध्यै भगवन् पूरयास्य मनोरथान्" ॥]

इकि प्रार्थ्य अथैतन्मनोरथसिद्ध्यर्थं "असद्दे[शिके"त्यादि श्लोकोक्तरीत्या गुरुप[रम्परोपसत्तिपूर्वकं भगवन्तं प्रपद्य

"आत्मानं देहमीशंच चिन्तयेत्संयतेन्द्रियः ।
ज्ञानानन्दमयो नित्यः प[रमात्मात्मको ह्ययम् ॥

अस्मिन्दे]हे निवत्स्यामि शेषभूतोऽपि शार्ङ्गिणः ।
शुक्ललोहितसम्भूते जरारोगाद्युपप्लुते ॥

मेदोरक्तास्थि[मांसादिहेयद्रव्यसमाकुले ।
ता]पत्रयमहावर्तदह्यमानोऽनिशं भ्रमन् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ईषणात्रयतृष्णादिबाध्यमाने दुरत्यये ।
क्लिश्यामि पापभूयिष्ठे कारागृहनिभेऽशुचौ ॥

बहुजन्मबहुक्लेशे [जन्मवा]सादिदुःखिते ।
वसामि सर्वदोषाणामालये दुःखभाजने ॥

अस्माद्विमोक्षणार्थाय चिन्तयिष्यामि केशवम् ।
वैकुण्ठे परमव्योम्नि दुग्धाब्धौ वैष्णवे पदे ॥

अनन्तभोगपर्यङ्के समासीनं श्रिया सह ।
इन्द्रनीलमणिश्यामं शङ्खचक्रगदाधरम् ॥

पीताम्बरधरं देवं पद्मपत्रनिभेक्षणम् ।
श्रीवत्सकौस्तुभोरस्कं सर्वाभरणभूषितम्" ॥

एवं परिपूर्णं भगवन्तमनुसन्धाय वासुदेवादिव्यूहनामचतुष्टयं केशवादिव्यूहान्तरनामानि मत्स्यादिदशावतारनामान्यप्यधिगतानि पृथग्भूतानि स्तोत्रनिबद्धानि च देव्यादिनामानि च भारतोक्तानुस्मृत्यध्यायञ्च प्रहर्षजनकेनोच्चैश्शब्देन सङ्कीर्तयन्

एवं शृण्वतामपि सकलदुरितहारिणा हरिसङ्कीर्तनेन संहृष्टमानसः सन्ध्यायामासन्नायां भगवन्तमुपासितुमधिजिगमिषुस्सङ्कल्पं कुर्यात् । हरिःओम् 'कृतञ्च करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भगवद्वासुदेवपादारविन्दार्चनेन अभिगमनोपादानेज्यास्वाध्याययोगपर्यन्तेन भगवत्कर्मणा भगवन्तमर्चयिष्यामि' इति सामान्येन सङ्कल्प्य ओं कृतञ्च करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्यभगवद्वासुदेव-पादारविन्दार्चनेन अभियमनेन भगवत्कर्मगा भगवन्तमर्चयिष्यामि' । इत्य-भिगमनं सङ्कल्प्य ओं भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतः कर्म करिष्यामि वासुदेवस्य । इत्यनुसन्धायात्मानं भगवानेव स्वशेषभूतेन मयाऽस्वकीयैः कल्याणतमैरौपचारिकसांस्पर्शिकाभ्य-वहारिकैर्भोगैरखिलपरिजनपरिच्छदान्वितं स्वात्मानं पीतं कारयितुमुपक्रमते इति चानुसन्धाय, "ओं नमः क्षितिधराय महावराहाये"ति नमःपूर्वेण क्षितिधरलिङ्गेन मन्त्रेण श्रीवराहं नमस्कृत्य

'नमो वराहरूपस्य प्रियायै हरिवल्लभे ।
त्वं माता सर्वभूतानां पादस्पर्शं क्षमस्व मे ॥

[नमोस्तु प्रियदत्तायै तुभ्यं देवि वसुन्धरे ।
त्वं माता सर्वभूतानां पादस्पर्शं क्षमस्व मे' ॥]

इति महाभारतादिषूक्तेन मन्त्रेण महावराहमहिषीं भुवं प्रणम्य प्रथमं वामपादं भूमौ विन्यस्य "विष्णोः क्रमोऽसी"ति विष्णुक्रमणमन्त्रेण पदक्रमान्कुर्वन् पादेन्द्रियाधिदैवतं त्रिविक्रमं विष्णुं ध्यात्वा, दर्भतिलाक्षतवस्त्रादिकं दृष्टादृष्ट-साधनं स्नानोपकरणं सर्वं समाहृत्य तमस्तिरोहितदुष्टजन्तुपलायनार्थं वैणवं दण्डं सङ्गृह्य निर्गममार्गं सञ्चाल्य गृहान्निर्गच्छन् 'ओं नमः केशवाय' इति केशवमनुध्यायेत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ततः स्वाश्रमग्रामादिभ्यो बहिर्नैरृत्यां दिशि द्वित्रेषु पातप्रमितां भुवमतिक्रम्य शुद्धदेशे निक्षिप्तस्नानोपकरणो विविक्तदेशं गत्वा यज्ञोपवीतं दक्षिणे कर्णे शिरसि वा निधायोत्तरीयेणावकुण्ठनं कृत्वा घ्राणास्ये वाससा संवेष्ट्याऽयाज्ञीयैरनार्द्रैस्तृणपर्णकाष्ठैर्लोष्ठेन वा भूमिं संछाद्य सन्ध्यासु चोदङ्मुखो रात्रौ दक्षिणामुख ऊर्ध्वमधस्तिर्यक् चापश्यन्नभोभूम्यन्तरञ्च पश्यन्ननन्यचित्तश्चिरमवस्थानं कुर्वन् पाणिना मौलिमस्पृशन् किञ्चिदप्यनुच्चरन् असोपानत्को देवालयनदीतीरदर्भपृष्ठशाड्वलवल्मीकगिरिपृष्ठजलयज्ञभूफालकृष्टभूयज्ञीयद्रुमच्छायावर्त्मगोष्ठभस्मतुषाराङ्गारश्मशानपराशुचियुक्तोषरचतुष्पथसस्याढ्यभूकुञ्जव्यतिरिक्तस्थलेषु सोमसूर्याग्नितीर्थब्राह्मणसन्ध्याम्बुगोस्त्रीवायुदेवताभिमुख्यं वर्जयन् मूत्रपुरीषे कुर्यात् । न वेगन्धारयेन्नोपरुद्धः क्रियाः कुर्यात् । यावच्चेद्वेगं धारयति तावदप्रयतस्स्यात् । नीहाराद्यन्धकारजनिते दिङ्मोहने प्राणबाधभयेषु च यथासुखं मूत्रपुरीषोत्सर्जनं कुर्यात् । यदि विस्मृतोपवीती मलपुरीषे कुर्यात् तत्सूत्रं परित्यज्य सूत्रान्तरं धारयेत् । जलालाभस्थले यदि रेतोमूत्रपुरीषोत्सर्जनं कुर्यात् तदाऽकृतशौचश्चेत् आसूर्यदर्शनं तिष्ठेत् । उदके लब्धे यथाविधि शौचं कृत्वा सचेलस्नानं अहोरात्रोपवासं महाव्याहृतिभिर्होमं च कुर्यात् । यद्यार्द्रवाससा विण्मूत्रे कुर्यात् प्राणायामत्रयं कृत्वा पुनस्स्नानेन शुद्ध्येत् । न पर्णलोष्ठाश्मभिर्मूत्रपुरीषापकर्षणं कुर्यात् । सव्यकरेण गृहीतशिश्न एव मूत्रपुरीषोत्सर्जनं कुर्यात् । यतिस्तु त्रिदण्डमुपदण्डेन बन्धयेत् उपदण्डाभावे निधानस्थले चाशुद्धे त्रिदण्डसहित एव मूत्रपुरीषे कुर्यात् । तत उत्थाय शौचपर्यन्तं शिश्नमनुत्सृजन्

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूर्वगृहीतां ससिकतां मृदं दक्षिणहस्तेन गृहीत्वा प्रागुदीच्यां उदीच्यां वा शौचदेशं गत्वा मृदं निधायोर्ध्वजानुरासीन ऊरुद्वयान्तस्थेन पाणिना सव्येन मृदं प्रक्षालयेत् । बहिर्जानुस्थितेन दक्षिणपाणिना जलं दद्यात् । एवं पूर्वं जलेन प्रक्षाल्य पश्चान्मृदा पश्चादम्बुभिः प्रक्षालयेत् । सुनिर्निक्ते मृदं दद्यान्मृदन्ते जलं दद्यात् प्रसृतिमात्रां प्रथमां मृदं, तदधिकां द्वितीयां तदधिकां तृतीयां तृतीयावदन्या मृदो दद्यात् । लिङ्गशौचे त्रिपर्वसंख्यापूरितां मृदं दद्यात् । हस्तादिष्ववदानसमां मृदं दद्यात् । एवं द्वादशकृत्वो गुदशौचं कृत्वा पञ्चकृत्वः करशौचं कृत्वा लिङ्गशौचं कृत्वा ततः करशौचं कृत्वा पदद्वयं संयोज्य त्रिः मृदा प्रक्षाल्य पुनः पञ्चकृत्वः करौ मृदा प्रक्षाल्य शौचभूतलं प्रक्षालयेत् । दिवा चेदेवं रात्रौ चेदर्धं, आतुरस्य तदर्धं, तथाऽध्वनि, अशक्तस्य यथाशक्ति, योषितां शूद्राणां चार्धं, गन्धलेपक्षयकरं वा अनुपनीतस्य, गन्धलेपक्षयकरं यथोक्तं गृहस्थानां, द्विगुणं ब्रह्मचारिणां, त्रिगुणं वानप्रस्थानां, चतुर्गुणं यतीनां, शौचं विधीयते । वापीकूपतटाकादिषु कथञ्चिदपि जलोद्धरणासंभवेऽपि जलादरत्निमात्रं प्रदेशं त्यक्त्वासीनो मणिबन्धात्परतोऽरत्निमात्रात् परतो वा जलान्तर्गतां मृदं गृहीत्वा शौचं कुर्यात् । बाह्यमृत्तिकान्नाहरेत् । शौचभूतलं च शोधयेत् । अन्यत्र नद्यादिषु तीर्थेषु च शौचं न कुर्यात् । तेषु उद्धृतवारिणैव कुर्यात् । उद्धृत्य शौचे तु मृत्तिकावारिदौ परिचारकौ कर्तव्यौ । मूत्रपुरीषविसर्जनात्पूर्वमेव सजलं भाजनं संस्थाप्य कूलात् परीक्षितां संसृष्टसिकतां मृदं आहरेत् । यतिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पश्चान्मृदमाहरेत् । यथाविधि शौचं कृत्वा सोत्तरीयस्नानं कुर्यात् । अङ्गारतुषकीटास्थिशर्कराश्ममलान्विताम् । कुडचपातश्मशानोत्थां मृदं नाददीत । आखुकृष्टात् वल्मीकात् पांसुलात्कर्दमान्मार्गात् ऊषरात् परस्य शौचशिष्टाच्च मृदं नाहरेत् । यदा वालुकाभिश्शौचं कुर्यात् तदा द्विगुणं कुर्यात् । दिवा सन्ध्यासु चोदङ्मुखो रात्रौ चोद्दक्षिणामुखः कुर्यात् । दक्षिणं पाणिं नाधः शौचे नियोजयेत् । नाभेरूर्ध्वं वामहस्तं न नियोजयेत् । मूत्रशौचे त्वेकां मृदं लिङ्गे, सव्ये करे तिस्रो हस्तयोर्द्वे दद्यात् । शुक्लशौचे द्विगुणं दद्यात् । विण्मूत्रविसर्जनार्थं उपविष्टस्तद्यदि न कुर्या [दर्धशौचं कुर्यात् ।] ब्रह्मचारी यतिश्च नान्तर्लिङ्गं विशोधयेत् । तयोरन्तर्लिङ्गशौचे चान्द्रायणं विधीयते । मूत्रपुरीषयोरेकैकस्य प्रवृत्तौ तस्यैव शुद्धिः क्रमेणोभयप्रवृत्तौ यथाक्रमं युगपत्प्रवृत्तौ तु पुरीषशुद्धिं प्रथमं कृत्वा मूत्रशौचं कुर्यात् । ततः पादशौचं कृत्वा करशौचं कुर्यादेवं सकृच्छौचं कृत्वा पुनरेवं कुर्यादिति निष्कर्षः । नाभेरधस्ताद्बाहुषु च कायिकै र्द्वादशभिर्मलैः सुरभिमद्यैर्वोपहतो मृत्तोयैः पञ्चभिस्तदङ्गं प्रक्षाल्याचान्तश्शुद्ध्येत् । अन्यत्रोपहतो मृत्तोयैः पञ्चभिः तदङ्गं प्रक्षाल्य स्नानेन शुद्ध्येत् । इन्द्रियेषु दशनच्छदेनचोपहतः उपोष्य स्नात्वा पञ्चगव्यप्राशनेन शुद्ध्येत् । परस्य तु शोणितरेतो विण्मूत्रमज्जास्वेद कर्णनेत्रनासिकास्थमलस्पर्शे चत्वारो वर्णा द्वात्रिंशन्मृत्तिकाभिः तदङ्गं प्रक्षाल्य स्नात्वा शुद्ध्येयुः । भुंजानस्य तु विप्रस्य गुदं प्रस्रवेद्यदि यथाविधि शौचं कृत्वा स्नानं चरित्वोपवासं कृत्वा पञ्चगव्येन शुद्ध्येत् । मूत्रपुरीषादि-करणे श्वादिस्पृष्टः स्नात्वा पुरुषसूक्तं जपेत् ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ननु

"पञ्चधा लिङ्गशौचं स्यात् गुदशौचं त्रिवेष्टितम् ।
पादयोर्लिङ्गवच्छौचं हस्तयोश्च चतुर्गुणम्' ॥

द्वे लिङ्गे मृत्तिके देये पञ्चापाने करे दश ।
उभयोस्सप्त दातव्यं मृदश्शुद्धिमभीप्सता" ॥

इति शाण्डिल्यवसिष्ठादिप्रभृतिषु मृत्संख्याभेदो दृश्यते ।

न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता ।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥

इति दक्षस्मृतौ विहितसंख्याया अतिक्रमे प्रायश्चित्तं च प्रतिपाद्यते । तत्कया संख्यया शौचं कर्तव्यमिति चेदुच्यते :-

'देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपतिमवस्थां च ज्ञात्वा शौचं समाचरेत्' ॥

यावच्च शुद्धिं मन्येत तावच्छौचं समाचरेत् ।
प्रमाणं शौचसंख्या वा न शिष्टैरुपदिश्यते ॥

यावन्नापैत्यमेध्यान्तात् गन्धो लेपश्च तत्कृते ।
तावन्मृद्वारि देयं स्यात् सर्वासु द्रव्यशुद्धिषु ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥

गंगातोयेन कृत्स्नेन मृद्भारैश्च न गोमयैः ।
आमृत्योराचरच्छौचं भावदुष्टो न शुद्ध्यति ॥

इति बोधायन, देवल, मनु, वैयाघ्रपादादि स्मरणात् देश-कालाद्यनुगुणं यावन्मनश्शुद्धि विहितसंख्यासु विविधासु यावत्यां संख्यायां गन्धलेपापकर्षणं मन्यते तावत्यां यस्यां चित्सौख्यायां शौचसमापनं कर्तव्यमिति स्ववर्णाश्रमाद्यवस्थाद्यनुगुणादृष्टार्थमृत्संख्या । वर्णपरिणामादिनियमवद्गन्धलेपक्षयकरं स्पर्शपीडादिरहितं यावत् भावशुद्धि-शौचं कृत्वा अपां द्वादशभिर्गण्डूषैः मुखशुद्धिं कृत्वा पाणी अरत्निपर्यन्तं पादौ च जानुपर्यन्तं प्रक्षाल्य यज्ञोपवीती बद्धशिखः पवित्रपाणिरप्रावृतकण्ठशिराः शुक्लवासाश्शुचौ देशे प्राङ्मुखो वो--दङ्मुखो वा पादौ जले स्थले च कृत्वा ऊर्ध्वजानुरासीनो दक्षिणं बाहुं जान्वन्तरे कृत्वा सव्येन पाणिना जलं स्पृशन् दक्षिणं हस्ततलं गोकर्णाकारं विन्यस्य तोयं गृहीत्वा अङ्गुष्ठकनिष्ठे मुक्त्वा विष्णुतीर्थसंज्ञे करतलोदरे अवस्थापयेत् । तदुक्तं भारते आनुशासनिके एकषष्टितमेऽध्याये "नारदः –

'देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथ वैष्णवम् ।
नृणां तीर्थानि पञ्चाहुः पाणिसन्निहितानि वै ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आद्यतीर्थन्तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ॥

पितृदैवत्यकार्याणि वर्धन्ते प्रेत्य चेह च ' ॥

इति ।

ततः ओं अच्युताय नमः ओं अनन्ताय नमः ओं गोविन्दाय नमः इति मन्त्रैः ब्राह्मेण तीर्थेनाशब्दं माषनिमग्नमात्रा हृदयङ्गमास्त्रिरपः पीत्वा ओं केशवाय नमः ओं नारायणाय नमः इति ब्राह्मेण तीर्थेन अधो द्विः परिमृज्य मध्यमाभिस्तिसृभिरङ्गुलीभिस्तूष्णीं सकृदोष्ठावुपस्पृश्य मुखं परिमृज्य दक्षिणेन पाणिना सव्यं पाणिं पादौ शिरश्च प्रोक्ष्य "ओं माधवाय नमः ओं गोविन्दाय नमः इत्यङ्गुष्ठोपकनिष्ठिकाभ्यां च चक्षुषी-संस्पृश्याप उपस्पृश्य, ओं विष्णवे नमः ओं मधुसूदनाय नमः इति तर्जन्यङ्गुष्ठाभ्यां नासिके संस्पृश्याप उपस्पृश्य, ओं त्रिविक्रमाय नमः ओं वामनाय नम इति अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे संस्पृश्याप उपस्पृश्य, ओं श्रीधराय नमः ओं हृषीकेशाय नम इति मध्यमाङ्गुष्ठाभ्यां भुजौ संस्पृश्याप-उपस्पृश्य, ओं पद्मनाभाय नम इति सर्वाभिरङ्गुलीभिर्नाभिं संस्पृश्य, ओं दामोदराय नम इति तलेन हृदयं संस्पृश्याप उपस्पृश्य, ओं श्री वासुदेवाय नम इति सर्वाभिरङ्गुलीभिर्मूर्धानं संस्पृश्याप उपस्पृश्य, सव्ये पाणौ शेषा आपो निनयेत् । अथ ब्रह्मयज्ञाचमनप्रकारः । ओं भूः ऋग्वेदः प्रीणातु, ओं भुवः यजुर्वेदः प्रीणातु, ओं सुवः सामवेदः प्रीणातु इति त्रिरपः पीत्वा ओं भूर्भुवस्सुवः ऋग्यजुस्सामाथर्वाङ्गिरसः प्रीणन्तु,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इतिहासपुराणे पीयेतामित्योष्ठौ ब्राह्मेण तीर्थेनोपस्पृश्य, मध्यमाभिस्तिसृभि- रङ्गुलीभिरसकृदोष्ठावुपस्पृश्य, मुखं परिमृज्य, अग्निः प्रीणात्विति दक्षिणेन पाणिना सव्यं पाणिं प्रोक्ष्य, विष्णुः प्रीणात्विति पादौ शिरश्च प्रोक्ष्य, चन्द्रादित्यौ प्रीयेतामित्युङ्गुष्ठोपकनिष्ठिकाभ्यां चक्षुषी संस्पृश्य, प्राणापानौ प्रीयेतामिति नासिके संस्पृश्य, प्रभासादिसर्वतीर्थानि प्रीणन्त्विति अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे संस्पृश्य, परमात्मा प्रीणात्विति तलेन हृदयं, श्रीः प्रीणात्विति शिरश्च संस्पृशेत् । सर्वत्राङ्गोपस्पर्शने अप उपस्पृशेत् । 'अन्ते वा सव्ये पाणौ शेषा अपो निनयेत्' इति पैठीनस्युक्तक्रमेण ब्रह्मयज्ञसमये आचमनं कुर्यात् । अत्राचमन प्रकारा बहुधा धर्मशास्त्रेषु भगवच्छास्त्रेषु पुराणादिषु च प्रतिपादिताः । तत्र स्वसूत्रोक्तमन्यद्वा यथाशक्ति यथोपदेशमाचमनं कुर्यात् । ग्रन्थियुक्तेन ग्रन्थिहीनेन वा दर्भेण युक्तकरः कर्माङ्गाचमनं कुर्यात् । कर्माङ्गव्यतिरिक्ताचमनं ग्रन्थिहीनेन दर्भेण युक्त एव कुर्यात् । तदा तत्पवित्रं परित्यज्य पुनराचामेत् । भुक्तोच्छिष्टं तु पवित्रं ग्रन्थियुक्तं ग्रन्थिहीनं वा परित्यजेत् । ब्राह्मेणैव तीर्थेनाचामेत् न कायदैव- पितृतीर्थैः । आपद्गतः कायदैववैष्णवैराचामेन्न पित्र्येण कदाचन आचामेत् । पादप्रक्षालनशेषेण नाचामेत् । यद्याचामेद्भूमौ स्रावयित्वा आचामेत् । न वर्षधाराम्बुना नाचामेत् । एवं कलुषदुर्गन्धतैलादिगन्धद्रव्यवासितं सफेनं सबुद्बुदं समृत्तिकं क्रिमिसंयुक्तं उष्णं क्षारच्छन्नं पर्युषितं आन्तरिक्ष्यं नखस्पृष्टमेकहस्तार्पितं भिन्नरन्ध्रविनिर्गतमजस्पृष्टं देवाभिषिक्तं हेयञ्च जलमाचमने त्यजेत् । तिष्ठन्नमन् हसञ्जल्पन्भाषणं शृण्वन्नन्यं स्पृशन्दिशः पश्यन्, काकश्वखरविट्क्रोडव्रात्यरजस्वलान्त्यजातिपतितदेवलकभिषक्-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शूद्रसङ्करजमहापातिकिनः पश्यन्, शयानः पादुकास्थः उष्णीषी कञ्चुकी बहिर्जानुकरोऽन्यधीर्नग्नो नोपस्पृशेत्। वीक्षितेन जलेनाचामेत्। रात्रावपि वीक्षितेनैवाचामेत्। भुक्त्वासनस्थोऽप्याचामेत्। ताम्रकांस्यराजतसौवर्णपात्रस्थेन जलेनाचामेत्। हृत्कण्ठतालुगाभिरद्भिः ब्राह्मणक्षत्रियविशः क्रमेण शुद्धा भवन्ति। शूद्रा स्त्रियश्च सकृत्स्पृष्टाभिस्तालुगाभिरद्भिः शुद्धा भवन्ति। स्नानपानक्षुतनिष्ठीवनस्वापजपहोमदानप्रतिग्रहभोजनसान्ध्यकर्मबलिकर्मवस्त्रपरिवृत्तिरन्योपसर्पणचत्वरक्रमणश्मशानाक्रमणस्त्रीशूद्रोच्छिष्टभोजनोच्छिष्टपुरुषदर्शनाभोज्यदर्शनविण्मूत्ररेतोत्सर्जनाश्रुलोहितपातचण्डालम्लेच्छपतितभाषणानृतभाषणमार्जारमूषिकादिस्पर्शातिहासातिक्रोधाधोवायुविसर्गशिखामोक्षोपवीतविपर्यासश्यावदन्तपर्यन्तोष्ठस्पर्श। देवार्चन,गुर्वभिवादनादिनिमित्तेषु आचामेत्। तदशक्तौ जलाभावे च दक्षिणं श्रवणं स्पृशेच्छक्तिविषये न मुहूर्तमप्यप्रयतस्स्यात् इति विधिवदाचम्य प्राङ्मुखः कुक्कुटासनसंस्थितः दक्षिणं पाणिं जान्वन्तरा कृत्वा कण्टकिक्षीरिवृक्षोत्थेनावरणेन द्वादशाङ्गुलेन कनिष्ठिकाग्रवत्स्थूलेन शल्मल्यश्वत्थभव्यधवकिंशुककोविदारशमीश्लेष्मातकविभीतकगुल्गुलुक्रमुकतिन्दुकेङ्गुदबन्धूकगुडाकतालहिन्तालकेतकबृहद्वटखर्जूरनालिकेरवानीरक्षीरिकाशिग्रुशिंशुपादेवदारुमल्लिकाकार्पासजाता स्त्याज्याः। सपत्रत्वग्घनग्रन्थियुक्तकाष्ठव्यतिरिक्तकाष्ठेन तृणेन पर्णेन वाभिमन्त्र्याहृतेन कुशकाशेष्टकालोष्टपाषाणाङ्गारवालुकापस्त्रनखतर्जनीमध्यमाकनिष्ठिकाङ्गुलिवर्जं प्रथममधरतो वामभागारम्भप्रदक्षिणं समन्तं दन्तान्धावयेत्। विधवाकन्यकाब्रह्मचारिणो दन्तधावनं न कुर्युः। करञ्जार्जुनकैडर्यशिरीषखादिरदूर्वाभिर्दन्तशुद्धिं यतिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कुर्यात् । तैलाभ्यक्तस्तु दन्तधावनं न कुर्यात् । प्रतिपत्पर्व नवमीषष्ठीतिथिषु शन्यर्काङ्गारकगुरुवारेषु जन्मनक्षत्रे श्राद्धदिनेषु उपवासदिनेषु च काष्ठेन दन्तशुद्धिन्न कुर्यात् । नद्यां देवालये गोष्ठे श्मशाने जलमध्यमे यागस्थाने च दन्तशुद्धिन्न कुर्यात् ।

दक्षिणाभिमुखस्तिष्ठन् शयानः उदङ्मुख आसनस्थश्च दन्तशुद्धिं न कुर्यात् । दन्तकाष्ठालाभे प्रतिषिद्धदिनेषु च तत्तरुपर्णैस्तृणैर्वा तेषामप्यभावेऽपां द्वादशगण्डूषैर्मुखशुद्धिं कुर्यात् । दन्तकाष्ठं प्रक्षाल्य भङ्क्त्वा शुचौ देशे त्यजेत् । "आयुरित्यादिमन्त्रस्य प्रजापति ऋषिः अनुष्टुप्छन्दः वनस्पतिर्देवता दन्तकाष्ठभञ्जने दन्तधावने च विनियोगः ।

"आयुर्बलं यशो वर्चः प्रजां पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते" ॥

इत्युभयत्र मन्त्रः । ततः शुचौ देशे पादौ प्रक्षाल्याचम्य तीरं संशोध्य देशकालौ सङ्कीर्त्य स्नानं सङ्कल्प्य

"समस्तजगदाधार शङ्खचक्रगदाधर ।
देहि देव ममानुज्ञां युष्मत्तीर्थनिषेवणे" ॥

इति भगवन्तमनुज्ञाप्य "हिरण्यशृङ्गं वरुण"मिति जपित्वा जलमवगाह्य उन्मज्ज्य "सुमित्रान आप ओषधयस्सन्त्वि"ति स्वात्मानमभिषिच्य "दुर्मित्रास्तस्मै भूयासु" रिति त्रिस्तीरे जलमुत्सृज्य "नमोऽग्नयेऽप्सुमते" इति नमस्कृत्य 'यदपां क्रूरयिति दक्षिण-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भागे अमेध्यांशं जलान्निरस्य 'अन्याशना'दिति 'गच्छ ब्रह्म सलोकता' मित्यन्तेन पाणिना जलं त्रिरालोड्य पाणिना जले चतुरश्रं तीर्थपीठमुल्लिख्य

"आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि ।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते" ॥

इति "इमं मे गङ्गे यमुने"ति गङ्गादिपुण्यतीर्थान्यावाहयामीत्यावाह्यानुस्मृत्य

"विष्णुवामपदाङ्गुष्ठनखस्रोतोविनिस्सृते ।
तद्भक्तिविघ्नरूपात्त्वं गङ्गे मां मोचयैनसः ॥

सह्यपादोद्भवे देवि श्रीरङ्गोत्सङ्गगामिनि ।
श्रीकावेरि नमस्तुभ्यं मम पापं व्यपोहय" ॥

इति तीर्थस्य अर्घ्यं दत्वा मूलमन्त्रेणाभिमन्त्र्य "आपो अस्मान्मातरश्शुन्धन्त्वि"त्यादित्याभिमुखो निमज्ज्योन्मज्ज्य "आपो वा इदं सर्व"मित्यपो अभिमन्त्र्य "आपो हिष्ठा मयो भुव' इति तिसृभिः "दधिक्राव्ण" इत्यनेन "हिरण्यवर्णा"इत्यनुवाकेन च मार्जयित्वा अघमर्षणसूक्तस्य अघमर्षण ऋषिः अनुष्टुप्छन्दः भाववृत्तो देवता" । "ऋतं च सत्यं चार्थाद्धादिति तृचं चतुर्ऋचं वा जले निमग्नस्त्रिषडष्टकृत्वो द्वादशकृत्वो वाऽऽवर्तयेत् । "एष भूतस्य भव्य"

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति निमज्ज्योन्मज्ज्य मूलमन्त्रेणाभिमन्त्र्य जलाञ्जलिमादाय सप्तकृत्वोऽभिमन्त्र्य स्व मूर्ध्नि सिञ्चेत् । एवं त्रिस्सप्तकृत्वो वा दक्षिणेन पाणिना जलमादाय सप्तकृत्वो मूलमन्त्रेणाभिमन्त्र्य पीत्वाऽऽचम्य स्वात्मानं सप्तकृत्वः प्रोक्ष्य परिपिच्य विरजां ध्यात्वा तीर्थे निमग्नो भगवत्पादारविन्दविन्यस्तशिरस्कोऽष्टाविंशतिवारं तदुपरि यावच्छक्ति वा मूलमन्त्रं जपित्वोन्मज्ज्य द्विराचम्य देवर्षिपितृतर्पणं सङ्कल्प्य स्व स्वतीर्थेनैव गृहीत्वा स्वस्वतीर्थेन गोशृङ्गमात्रमुद्धृत्य वारिस्थ एव देवानृषीन्पितॄन् भगवदात्मकान् ध्यात्वा सन्तर्प्य, व्याहृतिभिर्व्यस्ताभिस्समस्ताभिस्तर्पयित्वा प्राचीनावीति संस्कृतप्रमीतानां त्रीनुदकाञ्जलीन् तीरे दत्वा असंस्कृतप्रमीतानां एकं तीरे दत्वा तीरं गत्वा निवीती

"ये केचास्मत्कुले जाता अपुत्रा गोत्रजा मृताः ।
तेगृह्णन्तु मयादत्तं वस्त्रनिष्पीडनोदकम् ॥

ये बान्धवाबान्धवाश्च येऽन्यजन्मनि बान्धवाः ।
ते सर्वे तृप्तिमायान्तु भूमौदत्तेन वारिणा ॥

यन्मया दूषितंतोयं शरीरमलसम्भवात् ।
तस्यपापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम्" ॥

इति चतुर्गुणीकृतं वस्त्रान्तं सन्दर्श्य तीरे निष्पीड्यासीनः

अन्येन वाससः खण्डद्वयेन शिरोऽङ्गं च प्रत्येकं परिमृज्य "शुची वो हव्या मरुत" इति शुचिवस्त्रं संप्रोक्ष्य "देवस्यत्वे"त्यादाय "अवधूतं रक्ष"



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हृत्यवधूय "उदुत्यञ्चित्रमिति" द्वाभ्यां सूर्याय दर्शयित्वा "आवहन्ती वितन्वाने"ति कौपीनाच्छादनपूर्वकं शुक्लं वासोधृत्वा, धृतोत्तरीयश्चोरुपर्यन्तं मृज्जलाभ्यां प्रक्षाल्य, द्विराचम्य —

## ऊर्ध्वपुण्ड्रधारणक्रमः

कम्बलाद्यासनेस्थित्वा अस्त्रमन्त्रेण वामपाणितलं संशोध्य "अश्वक्रान्त" इति "उद्धृतासीति" च श्वेतां मृदमादाय प्रणवेन वामपाणितले निधाय "मृत्तिके हन मे पाप" मित्यभिमन्त्र्य "आपोवा इद"मिति जलं गृहीत्वा 'गन्धद्वारा'मिति सेचनं कृत्वा अस्त्रमन्त्रेण रक्षां कृत्वा प्रणवेन सम्मिश्रं कृत्वा मूलमन्त्रेणाभिमन्त्र्य नृसिम्हबीजं लिखित्वा "भगवान् पवित्रं वासुदेवः पवित्रं शतधारं सहस्रधारमपरिमितधारमच्छिद्रमक्षयमरिष्टमनन्तमच्युतं परिमितं परमं पवित्रं भगवान् वासुदेवः पुनातु इति पवित्र मन्त्रेण "देवस्त्वा सविता पुना"त्विति च तोयं निक्षिप्य तर्जन्या मृदंजलञ्चैकीकृत्य भगवत्पादाम्बुजयुगलं स्मरन् "विष्णोर्नुकं विष्णोरराट"मिति चाभिमन्त्र्य पञ्चोपनिषन्मन्त्रेण मूलमन्त्रेण वासुदेवद्वादशाक्षरेण विष्णुसूक्तेन चाभिमन्त्र्य प्रथमं तर्जन्या प्रणवेन मूर्ध्नि मृदं विन्यस्य प्रणवादिनमोऽन्तैः केशवादिद्वादशनामभिः ललाटोदर-मध्यवक्षःकण्ठदक्षिणोदरभुजस्कन्धवामोदरभुजस्कन्धपृष्ठत्रिकेषु क्रमेण ललाट-कण्ठस्कन्धत्रिकेषु चतुरङ्गुलायतानि अन्यत्राष्टाङ्गुलायतानि द्व्यङ्गुल विस्तृतानि ऋजूसि सान्तरालानि रम्याणि हरिपदसंस्थानानि द्वादशोर्ध्व-पुण्ड्राणि तर्जन्या धृत्वा द्वादशाक्षरविद्यया शेषं मूर्ध्नि विन्यस्य हरिद्राचूर्णं द्वादशसु पुण्ड्रमध्यदेशेषु धृत्वा प्रणवसंपुटितैर्द्वादशाक्षरमन्त्रस्थैरक्षरैः केशवादि द्वादशनामभिः विष्णुगायत्र्या च अङ्गुलीभिः स्पृशन् केशवादीन् ध्यात्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"चिन्तयामि श्रियोपेतं ललाटेकेशवं विभुं ।
लक्ष्म्या समेतं ध्यायामि नारायणमधोदरे ॥

माधवं कमलानाथं चिन्तयामि सदोरसि ।
पद्मापतिश्चिन्तयामि गोविन्दं कण्ठकूर्पके ॥

पद्मिनीवल्लभं विष्णुं चिन्तये दक्षिणोदरे ।
दक्षिणेऽस्मिन्भुजेपद्मा वासिनं मधुसूदनम् ॥

स्मरामि दक्षिणे स्कन्धे रमानाथं त्रिविक्रमं ।
वामेवृषाकपायीशं कुक्षौ ध्यायामि वामनम् ॥

धन्यानाथं चिन्तयामि श्रीधरं सव्यवाहके ।
वामस्कन्धे हृषीकेशं सिद्धिनाथं विचिन्तये ॥

पृष्टदेशे पद्मनाभं यज्ञेशं तं विचिन्तये ।
दामोदरं स्मरामीशं इन्दिरावल्लभं त्रिके" ॥

इति तत्तत्स्थाने तत्तन्मूर्तिध्यानं कृत्वा नमस्कुर्यात् । एवं त्रयोदश द्वादशाष्टौ षट् चत्वार्येकं वेति संख्याभेदेन ऊर्ध्वपुण्ड्राणि यथाशक्ति यथाविधि धारयेत् । तत्र मोक्षार्थी त्रयोदश द्वादश पुण्ड्राणि धारयेत् । तत्र ललाटादिमूर्धपर्यन्तेषु पूर्वोक्तेषु त्रयोदशसु स्थानेषु प्रणवादि नमोन्तैः केशवादि द्वादशनामभिः द्वादशाक्षरविद्यया च त्रयोदशोर्ध्वपुण्ड्राणि धारयेत् । शिरोव्यतिरिक्तेषु तेषुस्थानेषु द्वादशाक्षरविद्याव्यतिरिक्तै रेतै रेव मन्त्रै र्वैकल्पिकै

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

द्वादशोर्ध्वपुण्ड्राणि धारयेत्। भोगार्थी अशक्तश्च कण्ठे परितस्थितानि चत्वारि स्थानानि शिरश्च वर्जयित्वा ललाटादिषु अष्टसु स्थानेषु प्रत्यक्षरं विष्णुगायत्रीसमन्वितैः प्रणवसम्पुटितै रष्टाक्षरमन्त्रस्थैरक्षरैरष्टोर्ध्वपुण्ड्राणि धारयेत्। भोगार्थी अशक्तश्च ललाटहृत्कण्ठकुक्षिभूजद्वयेषु षट्स्थानेषु प्रत्यक्षरं विष्णुगायत्रीसमन्वितैः प्रणवसम्पुटितैर्विष्णुषडक्षरमन्त्रस्थैरक्षरैष्षडूर्ध्वपुण्ड्राणि धारयेत्। फलान्तरार्थी अशक्तश्च ललाटहृद्भुजद्वयेषु चतुर्षु स्थानेषु प्रणवादिनमोन्तैर्वासुदेव, सङ्कर्षण, प्रद्युम्नानिरुद्धमन्त्रैश्चत्वार्योर्ध्वपुण्ड्राणि धारयेत्। अत्यन्ताशक्तः "उद्धृतासीति"मन्त्रेण प्रणवेन वा ललाटे एकमूर्ध्वपुण्ड्रं धारयेत्। अत्रायं निष्कर्षः। गुरुलघुविकल्पे गुरोरेव मुख्यत्वं। यत्र तु कर्मविशेषाङ्गतया वा फलविशेषमुद्दिश्य वा न्यूनसंख्याविधानं तत्र विशेषवचनबलान्न्यूनतयैव तत्परिग्रहः। अन्यत्र तु अधिकपरिग्रह एव मुख्यः। द्रव्यालाभाशक्त्यादिदशासु गत्यभावात् न्यूनपरिग्रहः। अत्यन्ताकरणात् यथाशक्तिकरणस्य नित्ये शास्त्रीयत्वात् काम्येष्वपि केषुचित् यथाशक्त्यनुष्ठानेऽपि तत्तद्यत्नानुरूपफलस्य प्रतिपादितत्वादिति। कण्ठे तुलसीनलिनाक्षमालां श्रीपवित्रञ्च धारयेत्।

## प्रातस्सन्ध्यावन्दनक्रमः

ततः स्वाचान्तः प्राणानायम्य प्रातस्सन्ध्यावन्दनं सङ्कल्प्य गायत्र्या आपोऽभिमन्त्र्य प्रणवेन प्रथमं व्याहृतिभिर्द्वितीयं गायत्र्या तृतीयं मार्जनं कृत्वा 'आपोहिष्ठे'ति तिसृभिर्मार्जनं कृत्वा व्याहृतिभि स्स्वात्मानं परिषिच्य 'सूर्यश्चे'त्याचम्य 'दधिक्राव्णो' इति 'आपो-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हिष्ठेति नवभिर्ऋग्भि'र्हिरण्यवर्णा' इति चतसृभिः 'पवमानस्सुवर्जन' इत्यनुवाकेन कूर्चेन च पुनर्मार्जयित्वा प्रणवव्याहृतिभिस्स्वात्मानं परिषिञ्चेत्। एवं स्वस्वसूत्रोक्तप्रकारेण कृत्वा गायत्र्याऽभिमन्त्रितं जलमादित्यमण्डलान्तस्थिताय परमात्मने त्रिरर्घ्यरूपं दत्वा कालातिपत्तिप्रायश्चित्तार्घ्यंच दत्वा, प्रणवव्याहृतिभिरात्मानं परिषिच्य, वज्रीभूततज्जलनिहतमन्देहाख्यरक्षानिरसनपापावधूननार्थं सकृत्प्रदक्षिणं कृत्वा 'असावादित्यो ब्रह्मे'ति ध्यायन् आत्मानमालभ्योपविश्य मार्गशीर्षादि मासेशान् केशवादीनि तत्तन्मन्त्रैस्तर्पयित्वा आचम्य शुचौ देशे प्राङ्मुखस्तिष्ठन् यथाविधि प्राणायामत्रयं कृत्वा प्रणवव्याहृतिगायित्रीगायत्री शिरसा ऋषिछन्दो देवताः ध्यात्वा 'आयात्वि'तिगायत्रीमावाह्य प्रणवयुक्ताभिर्व्याहृतिभिस्सहितां गायत्रीं शिरसासह दशकृत्वां जपित्वा तुरीयपादमष्टोत्तरशतमष्टाविंशतिवारं दशवारं वा जपित्वा प्रणवव्याहृतित्रययुक्तां गायत्रीं अष्टोत्तरसहस्रकृत्वः अष्टोत्तरशतकृत्वोऽष्टाविंशतिकृत्वो द्वादशकृत्वो दशकृत्वोऽष्टकृत्वा वा मन्त्रार्थानुसन्धानपुरस्सरं जपित्वा पूर्ववत्कृत प्राणयामत्रयः सन्ध्योपस्थानसङ्कल्पपूर्वकं 'उत्तमे शिखर' इति मन्त्रेण गायत्रीमनुज्ञाप्य स्वस्वसूत्रोक्तै'र्मित्रस्ये'त्यादिभिर्मन्त्रैः आदित्यमण्डलान्तस्थितं भगवन्तमुपस्थाय सप्रदक्षिणं भगवदात्मक सन्ध्यादिपञ्चक नमस्कारं कृत्वा "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यधीतं हृदयान्तस्थितं परमात्मानमभिवाद्य प्रणम्य दिगादिनमस्काराणामपि स्वपूर्वपूर्वोपदेशानुष्ठानपारम्पर्यमस्तिचेत्तत्रापि भगवदात्मक-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यानपूर्वकं प्रणमेत् । श्रीमदष्टाक्षरमन्त्रजपं अष्टोत्तरशतं यथाशक्ति वा कुर्यात् । ततोऽथर्वशिरसं नारायणोपनिषदाऽऽदित्यमुपतिष्ठेत् । यद्वा गायत्रीजपानन्तरं "उत्तमे शिखर" इति तामनुज्ञाप्य मूलमन्त्रजपं कुर्यात् । ततो मैत्रतृचा नारायणोपनिषद्भ्यामृते उपतिष्ठेत् । अर्घ्यदान जपोपस्थानरूप कर्मत्रयस्य पृथक्त्वात् परस्पराङ्गाङ्गिभावाभावात् मध्ये मूलमन्त्रजपस्सुकर एवेति साम्प्रदायिका आहुः । ततो मूलमन्त्रेण जलं पीत्वाऽऽचाम्यप्रोक्ष्यपरिषिच्योद-काञ्जलीन् आदित्यमण्डलान्तर्वर्ति भगवत्पादारविन्दयोर्निक्षिप्य प्राणानायम्य भगवन्तं ध्यात्वा ततः आधारशक्त्यादि पृथिव्यन्तं तर्पयित्वा श्रीवैकुण्ठादि पारिषदान्तर्पयेत् ।

## आधारशक्तितर्पणक्रमः

यथा - "ओं आधारशक्तिन्तर्पयामि । प्रकृतिं तर्पयामि । सकल जगदाधारं कूर्मरुपिणं नारायणं तर्पयामि । अनन्तं नागराजं तर्पयामि । भूमिं तर्पयामि । श्रीवैकुण्ठदिव्यलोकं तर्पयामि । श्री वैकुण्ठदिव्यजनपदं तर्पयामि । श्रीवैकुण्ठदिव्यनगरं तर्पयामि । श्रीवैकुण्ठदिव्यविमानं तर्पयामि । आनन्दमयं दिव्यमण्टपरत्नं तर्पयामि । आस्तारणरूपिणं अनन्तं नागराजं तर्पयामि । धर्मं तर्पयामि । ज्ञानं तर्पयामि । वैराग्यं तर्पयामि । ऐश्वर्यं तर्पयामि । अधर्मं तर्पयामि । अज्ञानं तर्पयामि । अवैराग्यं तर्पयामि । अनैश्वर्यं तर्पयामि । एभिः परिच्छिन्नतनुं पीठभूतं सदात्मानं अनन्तं नागराजं तर्पयामि ओं ऋग्वेदं तर्पयामि यजुर्वेदं तर्पयामि । सामवेदं तर्पयामि । अथर्वणवेदं तर्पयामि । कृतयुगं तर्पयामि । त्रेतायुगन्तर्पयामि ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

द्वापरयुगन्तर्पयामि। कलियुगं तर्पयामि। कालचक्रं तर्पयामि। पीठभूतंनागराजं तर्पयामि। अष्टदलपद्मं तर्पयामि। सूर्यमण्डलं तर्पयामि। सोममण्डलं तर्पयामि। वह्निमण्डलं तर्पयामि। विमलां तर्पयामि। उत्कर्षिणीं तर्पयामि। ज्ञानां तर्पयामि। क्रियां तर्पयामि। योगां तर्पयामि। प्रह्वीं तर्पयामि। ईशानां तर्पयामि। अनुग्रहां तर्पयामि। जगत्प्रकृतिं दिव्ययोगपर्यङ्कं तर्पयामि। सहस्रशीर्षं नागराजं तर्पयामि। अनन्तं पादपीठं तर्पयामि। सर्वपरिवाराणां पद्मासनानि तर्पयामि। अनन्तगरुडविष्वक्सेनानां सपीठकपद्मासनानि तर्पयामि। अस्मद्गुरूंस्तर्पयामि। परमात्मानं नारायणं तर्पयामि। श्रीं श्रियं तर्पयामि। भूं भूमिं तर्पयामि। नीं नीळां तर्पयामि। सर्वा भगवद्दिव्यमहिषीस्तर्पयामि। किरीटमकुटाधिपतिं तर्पयामि। किरीटमालामापीडात्मानं तर्पयामि। दक्षिणकुण्डलं मकरात्मानं तर्पयामि। वामकुण्डलं मकरात्मानं तर्पयामि। वैजयन्तीं वनमालां तर्पयामि श्रीमत्तुलसीं तर्पयामि। श्रीवत्स श्रीनिवासं तर्पयामि। हारं सर्वाभरणाधिपतिं तर्पयामि। श्रीकौस्तुभं सर्वरत्नाधिपतिं तर्पयामि। श्री काञ्चीगुणोज्ज्वलं पीताम्बरं तर्पयामि। सर्वाणि भगवद्दिव्यभूषणानि तर्पयामि। श्रीसुदर्शनं हेतिराजं तर्पयामि। नन्दकं खड्गाधिपतिं तर्पयामि। पद्मं तर्पयामि। पाञ्चजन्यं शङ्खाधिपतिं तर्पयामि। शार्ङ्गं चापाधिपतिं तर्पयामि। कौमोदकीं गदाधिपां तर्पयामि। सर्वाणि भगवदायुधानि तर्पयामि। सर्वा भगवत्पादारविन्दसंवाहिनीस्तर्पयामि। अनन्तं नागराजं तर्पयामि। सर्वान् भगवत्परिचारकांस्तर्पयामि। भगवत्पादुके तर्पयामि। सर्वान् भगवत्परिच्छदांस्तर्पयामि। वैनतेयं तर्पयामि। विष्वक्सेनं तर्पयामि। गजाननं तर्पयामि।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जयसेनं तर्पयामि । हरिवक्त्रं तर्पयामि । कालप्रकृतिसञ्ज्ञं तर्पयापि । सर्वान् भगवद्विष्वक्सेन परिजनांस्तर्पयामि । चण्डं द्वारपालं तर्पयामि । प्रचण्डं द्वारपालं तर्पयामि । भद्रं द्वारपालं तर्पयामि । सुभद्रं द्वारपालं तर्पयामि । जयं द्वारपालं तर्पयामि । विजयं द्वारपालं तर्पयामि । धातारं द्वारपालं तर्पयामि । विधातारं द्वारपालं तर्पयामि । सर्वान् भगवद्द्वारपालान् तर्पयामि । कुमुदं गणाधिपतिं सवाहनपरिवारप्रहरणं तर्पयामि । कुमुदाक्षं गणाधिपतिं सवाहनपरिवारप्रहरणं तर्पयामि । पुण्डरीकं गणाधिपतिं सवाहनपरिवार-प्रहरणं तर्पयामि । वामनं गणाधिपतिं सवाहन परिवारप्रहरणं तर्पयामि । शङ्कुकर्णं गणाधिपतिं सवाहनपरिवारप्रहरणं तर्पयामि । सर्वनेत्रं गणाधिपतिं सवाहनपरिवारप्रतहरणंतर्पयामि । सुमुखं गणाधिपतिं सवाहन-परिवारप्रहरणं तर्पयामि । सुप्रतिष्ठितं गणाधिपतिं सवाहनपरिवारप्रहरणं तर्पयामि । सर्वान् भगवत्पारिषदान् तर्पयामि ।

## ब्रह्मयज्ञक्रमः

एवं तर्पयित्वाऽऽचम्य ब्रह्मयज्ञं तैत्तिरीयश्रुत्याद्यनुसारेण उदित आदित्ये यथाविधि कुर्यात् ।

यथा - सङ्कल्प्य विद्युदसीत्यपः पीत्वाऽऽचम्य प्राणानायम्य सपवित्रौ करौ दक्षिणोत्तरौ कृत्वा तत्सवितुरिति पच्छोऽर्धर्चशस्ततः सर्वा व्याहृती-र्विहृताः पादादिषु अन्तेषुवा तथार्धर्चयोरुत्तमां कृत्स्नामिति ब्रह्मोपदेशोक्त-क्रमेण सप्रणवमुच्चार्य हरिरोमित्युच्चार्य भूर्भुवस्सुवस्सत्यं तपःश्रद्धायां जुहोमीत्युक्त्वा स्वयंभुवे नमः । सरस्वत्यै नमः । सावित्र्यै नमः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रियै नमः । श्रियः पतये नमः । प्राणाय वाचस्पतये नमोवाचे प्राणपत्न्यै । अधीहि भो इत्यादित्यमभिवीक्ष्य औपासनवैश्वदेवान्ते अधीहि भो इति गार्हपत्यं औपासनं (वह्निर्नमातृ) अभिमन्त्र्य गुरुसमीपे गुरुन्तथोक्त्वा तस्मादनुज्ञां प्राप्य "यो ब्रह्माणं विदधाति"त्यृचा मूलमन्त्रेण द्वयेन च भगवन्तं नारायणं प्रणम्य वेदाचार्येभ्यो नमः ओं वेदव्यासाय नम इत्युच्चार्य ओं तत् सत् इत्युक्त्वा चतुरो वेदादीनधीत्य नमो ब्रह्मण इति परिधानीयान्त्रिरुक्त्वा वृष्टिरसीत्यप उपस्पृश्य आचम्य काण्डर्षिदेवर्षि-पितृतर्पणं तत्तत्तीर्थेनैव यथास्वशाखं कृत्वाऽऽचम्य ब्रह्मार्पणं कुर्यात् । एवंप्रकारेण तर्पणादर्वाग्वा प्रातरौपासनानन्तरंवा वैश्वदेवावसाने मनुष्य-यज्ञानन्तरं वा ब्रह्मयज्ञं कुर्यात् । अत्र स्वशाखाध्ययनमेव प्रथमतः कार्यम् । अधीतान्यवेदश्चेत् तस्य पश्चादध्ययनं ब्रह्मयज्ञेन कार्यम् । प्रश्नाध्यायासमर्थो यथाशक्ति क्रमादनुवाकं वा सूक्तं वा सामवर्गं वाऽधीयीत । नाधीतवेदस्तु ब्रह्मयज्ञे गायत्रीं मूलमन्त्रञ्च यथाशक्ति जपेत् । अनधीतवेदोऽशक्तो वा ब्रह्मयज्ञे पुरुषसूक्तं होतॄन् वा अथर्वशिरसा वा जपेत् । अधितवेदोऽनधीतवेदोऽपि नित्यप्रश्नानन्तरं वैकल्पिक-पुरुषसूक्त होतृ अथर्वशिरो जपानन्तरं "नमो ब्रह्मण" इति परिधानीयायाः पूर्वं नित्यं कूश्माण्डानुवाकचतुष्टयं "अग्निर्मूर्धादिवःककुदि"ति छन्द-स्संज्ञं संहितागतानुवाकञ्च जपेत् । अत्र बोधायनः । जघनेन गार्हपत्यमुपविश्य औपासनस्य वा अधीहि भो इति गार्हपत्यमुक्त्वा प्राणायामैस्त्रिराचम्य सावित्रीं सहस्रकृत्वोऽऽवर्तयेत् शतकृत्वोऽपरिमितकृत्वो वा दशवारं वेदादयश्छन्दांसि कूश्माण्डानि चाधीतेति । भुक्तस्य ब्रह्मयज्ञेऽनधिकारः ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्पृश्याशौचदुष्टस्यानध्यायः । अदुष्टस्यापि अमेध्यशवशूद्रान्त्यपतितान्तिकदेशेऽनध्यायः यथाध्यायं अध्यायः पदस्यक्रमस्यवाऽध्यायः । अन्नाद्यकामो निर्भुजं ब्रूयात् । स्वर्गकामः प्रतृण्णं उभयकामः उभयमन्तरेणेति । ऋग्वेदारण्यकोक्तेः । अत्र निर्भुजशब्देन संहिता, प्रतृण्णशब्देन पदं उभयमन्तरेणेति शब्देन क्रमः उच्यते । उच्चैरध्येतव्यम् न तु मनसा । विद्युदाद्यनध्यायेष्वप्यध्येतव्यम् । अनियतप्रश्नाध्यायिनः अनध्यायेषु अल्पमेव अध्ययनं कार्यम् । संहिता शाखा काठकारण्यानि वैश्वदेवमन्त्रमन्त्रप्रश्नौ च पठेत् । पुनश्चैवमिति ब्रह्मयज्ञेऽध्ययनक्रमो ज्ञेयः । ऋग्वेदिनां संहिताब्राह्मणारण्यकानीति क्रमः । सामवेदिनां प्रकृतिऋग्ग्रन्थोत्तराग्रन्थप्रकृत्यूहरहस्यगतसाममहाब्राह्मणषड्विंशसामविधानार्षेयदेवताध्यायोपनिषत्संहितोपनिषद्वंशब्राह्मणानीति क्रमः । सायंकालात्प्रागेव ब्रह्मयज्ञः कर्तव्यः । अथावाहिततीर्थं मन्त्रांश्च स्वात्मनि समाहृत्य तीर्थासन्नविष्ण्वायतनं गत्वा प्रदक्षिणानि प्रणामांश्च युग्मानि कृत्वा विष्वक्सेनं तत्तद्द्वारपालांश्च प्रणम्यानुज्ञाप्य भगवन्मन्दिरं प्रविश्य भगवन्तमष्टाङ्गेन तत्तद्देशकालशक्त्येन मस्तिष्कसम्पुटप्रह्वाङ्गपञ्चाङ्गदण्डाङ्गादिष्वन्यतमेन वा प्रणम्य भगवतः पुरस्ताद्दक्षिणतोऽवस्थाय गुरुपरंपरया परमगुरुं भगवन्तं शरणमुपगम्य पावनमनोहरतद्दर्शनानन्दोपबृंहितसर्वाङ्गः प्रीतिपरिहाररूपपाणिः स्तव्यस्तवप्रियवशीकरणानि स्तोत्राणि पठित्वा भगवत्सेवयाऽऽत्मानं कृतार्थं मन्यमानो यथाशक्त्युपहारनिवेदनं पुष्पादिप्रदानं च कृत्वा भगवदनुज्ञया क्वचिन्निभृतमुपविश्य जपादिभिर्भगवन्तमुपासीत । भगवन्मन्दिरेच तत्तच्छास्त्रोदितानपचारान्परिहरेत् । ततः श्रीमन्नारायणं पूर्ववत्प्रणम्य विष्वक्सेनादी-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मनुज्ञाप्य भगवन्मन्दिरान्निर्गत्य स्वदेवाधिष्ठितं स्वाश्रमं गृहं वा गन्तुमुद्युक्तोऽभ्युक्षणं जलं सौवर्णरजतताम्रादि लोहमयमृण्मयपात्रेषु दृढेष्वादाय संयतात्मा वाग्यतो गृहमागत्य अन्येन जलेन सुप्रक्षालितपाणिपादः स्वाचान्तो 'वास्तोष्पत' इति सूक्तं जपन्भगवन्मन्दिरं संमृज्यानुशोध्य आवाहिततीर्थेन गोमयेनानुलिप्य 'आनो भद्रा' इति सूक्तेन रङ्गवल्लीं निक्षिपेत् । ततः स्वर्णं कुशं वाऽभ्युक्षणोदपात्रे निक्षिप्य होमपूर्वं यागभूमिमशेषाणिद्रव्याणि तदुचितस्थानानि च संप्रोक्ष्याचामेत् । एवं त्रिसन्ध्यमभ्युक्षणं कुर्यात् । नाप्रोक्षिते यजेत् । न निषिद्धपात्रेष्वभ्युक्षणमाहरेत् । (अभिगुप्तमाहरेत् पाणिना वस्त्रेण च नाहरेत्) शूद्रः कन्यानुपेतो वा नाहरेत् । अव्रत एकवस्त्रो वा नाहरेत् । न सव्येन पाणिना प्रोक्षयेत् । ततः श्रौतस्मार्तश्चाग्निः यस्य ससूत्रविधिना पूर्वं श्रौतं होमं कृत्वा स्मार्तं होमं कुर्यात् । परमैकान्तिनां श्रौतकर्मसु हिंसादियुक्तेषु उपरिचरादीनां प्रवृत्त्यदर्शनात् कथं तेषां करणीयत्वं ? कृतेष्वपि श्रौतकर्मसु तत्फलभोगस्यावश्यंभावित्वात् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति वचनात् । "एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति क्षयिष्णुत्वेनावगतानां तत्फलानां परमैकान्त्यनपेक्षितत्वाच्च । अतः प्रपन्नानां श्रौतकर्मसु प्रवृत्तिरयुक्तेतिचेत् मैवं पाञ्चरात्रे मन्त्रसिद्धान्तागमसिद्धान्ततन्त्रतन्त्रान्तरसिन्द्धान्तरूपेषु चतुर्ष्वपि मन्त्रसिद्धान्तमार्गेण तापादिपञ्चसंस्कारैः चक्राब्जमण्डले यथाविधि दीक्षितान् परमैकान्तिनःप्रति श्रौतकर्मणां भगवदाराधनरूपत्वेन विहितत्वात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्चसेव्यश्च नित्ययुक्तैः स्वकर्मसु ॥

सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ।
द्वापरस्य युगस्यान्ते ह्यादौ कलियुगस्य च ॥

इत्यत्र सङ्कर्षणोक्तसात्वतशास्त्रविधौ स्थित्वा तापपुण्ड्रादिकृतलक्षणैः वेदोक्त नित्यनैमित्तिकादि स्वस्वकर्मसु नित्ययुक्तैस्तत्कर्मसु भगवतोऽर्चनीयत्व-सेव्यत्वस्योक्तत्वात् । मोक्षधर्मे उपरिचरवसूपाख्याने 'काम्यनैमित्तिकाजस्रा याज्ञिकाः परमक्रियाः । सर्वं सात्वतमास्थाय विधिं चक्रे समन्वित' इति वसुनापि नित्यनैमित्तिककाम्यानां यज्ञानां पाञ्चरात्रोक्तमार्गेण कृतत्वेनोक्तत्वात् । विशिष्य तेन अश्वमेधादिकाम्यानां कर्मणामपि तत्रैवानुष्ठितत्वप्रतिपादनाच्च । न च वसुनापि नित्यनैमित्तिककाम्येषु यज्ञेषु पिष्टपशोरेव कृतत्वादेव ऋषि-संवादे साक्षिभूतेन अनेन देवेषु पक्षपातात् । पश्वालम्भे धर्मत्वेन प्रतिपादिते सति अस्यवसोः शास्त्रवचनदोषात् गर्ते पातित्यदर्शनाच्च पिष्टपशुसहित-यज्ञकर्मस्वेव प्रवृत्तिर्युक्ता न तु पश्वालम्भकर्मस्विति वाच्यम् । तत्रैव मोक्षधर्मे अधिकारचंदनाध्याये कृतयुगे पिष्टपशुः त्रेताद्वापरयोः पश्वालम्भः कलियुगे धर्मस्यैकपादेनस्थितिरित्युक्त्वा -

" गुरवो यत्रपूज्यन्ते साधुवृत्ताश्चमानिताः ।
वस्तव्यं तत्र युष्माभिः यत्र धर्मो नहीयते ॥

यत्र वेदाश्च यज्ञाश्च दमः सत्यं तपस्तथा ।
हिंसा च धर्मसंयुक्ता प्रचरेयुस्सुरोत्तमाः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स वै देशो हि वस्तव्यो मा वोऽधर्मः पदास्पृशेत् ।

इत्यादिना क्वचित्क्वचित्पश्वालम्भयुक्तधर्माविर्भावस्योक्तत्वात् । तस्मात्कृत-युगादियव्यवस्थया पिष्टपशोः साक्षात्पशोश्चालम्भः । पिष्टपशुविधेश्च इदानीं पठ्यमान शाखासु सूत्रेषु चादर्शनेन तत्प्रयोगस्याधुनिकैर्ज्ञातुमशक्यत्वात् बहुशाखादर्शिनां कार्तयुगाणामृषीणामेवात्राधिकारो युक्तः । नन्वेवं साक्षात्प-श्वालम्भे "न हिंस्यादिति" शास्त्रविरोधः । नचाग्नीषोमादिर्हिंसायाः विशेषविधानेन 'नहिंस्यादिति शास्त्रस्य आहवनीयादि शास्त्रस्य विशेषविहित-पदहोमेतरहोमविषयत्ववत् तदितरहिंसा विषयत्वमिति वाच्यम् । पदे क्रियमाणस्य होमस्याहवनीये कर्तुमशक्यतया विरोधेनाहवनीयशास्त्रस्य तदितर-विशेषविषयत्वेऽपि इहाविरोधेन उत्सर्गापवादन्यायासंभवादग्नीषोमीयशास्त्रस्य अहिंसाशास्त्रस्य च क्रमेण क्रतूपकारं प्रत्यवायश्च प्रतिपश्वालंभस्य साधन-त्वावबोधकत्वात् । नचाग्नीषोमीयादिविधिना बलवदनिष्टाजनकत्वविशिष्टेष्ट-साधनत्वशक्तेन सह बलवदनिष्टजनकत्वबोधकाहिंसाशास्त्रस्य विरोधोऽवर्ज-नीय इति वाच्यम् । अहिंसाशास्त्राविरोधाय अग्नीषोमीयादिविधेः विशिष्ठशक्तस्यापि श्येनादिविधेरिव इष्टसाधनत्वमात्रपरत्वस्योचितत्वादितिचेत् मैवं अग्नीषोमीयपश्वालम्भस्य हिंसात्वासंभवात् । तद्धि न तावत् दुःखजनक-त्वमात्रं । छेदनादेः चिकित्सकव्यापारस्यापि हिंसात्वापत्तेः । नापि प्राणवियोगो-द्देश्यकव्यापारत्वं, सर्वस्वहरणादेः हिंसात्वानापत्तेः सर्वस्वहरणादेरपिहिंसकत्वेन लोकव्यपदेशात् । नचायमौपचारिकः वैपरीत्यस्यापि सुवचत्वात् । किन्तु परमप्रयोजनापर्यवसायित्वे सति तादात्विक दुःखजनकत्वं । चिकित्सादि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

व्यावृत्तये कलञ्जभक्षणादि व्यावृत्तये च विशेषणद्वयम्। ततश्चाग्नीषोमीयादि-व्यापारस्य तादात्विकाल्पदुःखजनकत्वेऽपि परमप्रयोजनपर्यवसायितया उक्त-लक्षणाभावात् श्रुत्या हिंसात्वनिषेधाच्च नाहिंसाशास्त्रनिषेध्यता। अहिंसन् सर्वभूतान्यन्यत्र तीर्थेऽभ्य इत्यत्र तु अग्नीषोमीयपश्वालम्भस्य पामरप्रसिद्ध्या हिंसात्वमाशङ्क्य अन्यत्रतीर्थेभ्य इत्युक्तम्। अत एव तस्माद्यज्ञे वधोऽवधः इति मनुवचनेन पामरप्रसिद्ध्यावध्यत्वेन शङ्कितस्य पश्वालंभस्य तत्त्वदृष्टि-बलादवध्यत्वमुक्तम्। अत एव भगवता वेदान्ताचार्येण तात्पर्यचन्द्रिकायां अग्नीषोमीयादि पश्वालंभस्य "न वा उवे तन्म्रियसे" इत्यादि हिंसात्वाभावः, पिष्टपशोः कार्तयुगधर्मनिष्ठाधिकारिविशेषनियतत्वञ्च सिद्धान्तितम्।

स्वधर्ममपिचावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य नविद्यते॥

इति श्लोकभाष्यव्याख्यानावसरे 'यज्ञानां जप यज्ञो स्मीति' तत्रत्यभाष्य-व्याख्यानावसरे च अनुगीतायां अध्वर्युयति संवादे -

प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत्।
यतिरध्वर्युमासीनः हिंसेयमिति कुत्सयन्॥
तमध्वर्युः प्रत्युवाच्च नायं छागो विनश्यति।
श्रेयसा योक्ष्यते जन्तुः यज्ञश्रुतिरियं तथा॥
योह्यस्य पार्थिवो भागः पृथिवीं सम्यगिष्यति।
यदस्य वारिजे किञ्चित् तदपः प्रतिपद्यते॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूर्यश्चक्षुर्दिशः श्रोत्रं प्राणोऽस्यदिवमेव च ।
आगमे वर्तमानस्य न मे दोषोऽस्ति कश्चन ॥

शान्तिपर्वणि व्यासयुधिष्ठिरसंवादे धर्माधर्मविभागाध्याये

" वृथापशुसमालम्भं नैवकुर्यान्नकारयेत् ।
अनुग्रहः पशूनां हि संस्कारो विधिचोदितः " ॥

इत्यादिभिः श्लोकैः मन्त्रमहिम्ना पशोः प्राणचक्षुःश्रोत्रादीनां स्वस्वयोनिषु सूर्यादिषु प्रापितत्वात् वह्नाविन्धनप्रक्षेपवत् संज्ञपनस्य अहिंसात्वेनोपपादितत्वाच्च न पिष्टपशुः कार्यः । अमुमेवार्थं हृदि निधाय गीताभाष्ये भगवता भाष्यकारेणोक्तम् 'अग्नीषोमीयादिषु न च हिंसा पशोर्निहीनतरच्छागादिदेहपरित्यागपूर्वककल्याणदेहस्वर्गादिप्रापकत्वश्रुतेः'रिति । श्रीभाष्ये च " अशुद्धमिति चेन्नशब्दात्" इति सूत्रे शब्दादग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभावशब्दात् पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति ।" हिरण्य शरीरः ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिकं अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखतोऽपि न हिंसा प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः "न वा उवे तन्म्रियसे नरिष्यसि देवाँ इदेषि पथिभिस्सुगेभिः । यत्र यन्ति सुकृतो नापिदुष्कृतः तत्र त्वा देवस्सवितादधातु" इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपिरक्षकमेव वदन्ति । पूजयन्ति च तज्ज्ञा । इति उपरिचखसुनापि -

" पशुहिंसा वारिता च यजुर्वेदादियत्नतः ।
न चाहं वारये हिंसां द्रक्ष्याम्यैकान्तिको हरिम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति पिष्टपशुस्कया कारित इति वदन्तं क्रुद्धं बृहस्पतिं प्रति वाक्यस्योक्तत्वात् तस्यापि हिंसात्वबुद्ध्यभाव एव। यजुर्वेदे कस्याञ्चिच्छाखायां पिष्टपशुविधानेऽपि तच्छाखायाःप्रच्छन्नत्वात् आपस्तम्बादिभिरनुक्तत्वात् परमभागवतेन वैष्णवशास्त्रप्रवर्तकेन परमैकान्तिनामग्रेसरेण सर्वदा नरायणपरेन नित्यनैमित्तिककाम्ययज्ञानां नारायणध्यानपूर्वकं तदाराधनत्वेन विधायकेन भगवता विखनसाऽपि वैखानससूत्रेऽपि पिष्ठपशोरनुक्तत्वाच्च तस्य न कार्यत्वमित्यलमतिविस्तरेण।

न चैवमपि कर्मणां फलभोगावश्यम्भावदोषो न परिहृत इति वाच्यम्। तत्तत्फलेच्छामन्तरेण भगवदाराधनबुद्ध्यैवानुष्ठितानां तेषां तत्तत्फलजननासमर्थत्वात्। नचेक्षुक्षीरादिगतं माधुर्यं मम जिह्वायां न स्यादति बुद्ध्या इक्षुक्षीरादिके पीतेऽपि तद्गतमाधुर्यस्यानुभूयमानत्वात् तद्वत्पुण्यानां कर्मणां भगवदाराधनत्वेन करणेऽपि कथं तत्फलभोगाभाव इति वाच्यम्। प्रबलजिह्वादोषवशात् पीतेक्षुक्षीरादिमाधुर्यं यथा न ज्ञायते यथा वा बद्धकोष्टस्य हरीतकीशतभक्षणेऽपि विवेकाभावः यथा मणिमन्त्रौषधिवशात् अग्निसर्पादिगतदाहादिसहजशक्तिः प्रतिहन्यते तद्वत्पुण्यानां कर्मणां भगवदाराधनरूपाणां आरम्भावसानयोः 'कृतञ्चकरिष्यामीत्याद्युक्त्या भगवदर्पितानां भगवतो निरतिशयप्रीतिप्रतिहतानां फलजननशक्त्यभावात् स्वर्गादिफलसाधनभूते कर्मणि तत्कामस्यैवाधिकारेण फलेच्छारहितैर्मुमुक्षुभिर्भगवत्प्रीत्यर्थं अनुष्ठितानां कर्मणां अनधिकारिकृततया फलानुत्पादकत्वाच्च भगवदाराधनत्वेनानुष्ठितैः कर्मभिः फलभोगाभावस्य उपनिषद्भारतपाञ्चरात्रमन्वादिस्मृतिषूक्तत्वाच्च। अतो न फलभोगावश्यं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भावदोषः । उक्तं हि शान्तिपर्वणि राजधर्मे दुर्गातितरणाध्याये

"य एनं संश्रयन्तीह भक्त्या नारायणं हरिं ।
ते तरन्तीह दुर्गाणि न मेऽत्रास्तिविचारणा ॥
अस्मिन्नर्पितकर्माणः सर्वभावेन भारत ।
कृष्णे कमलपत्राभे दुर्गाण्यतितरन्ति ते" ॥ इति

दुर्गं - संसारदुर्गं, संसारं च पुण्यपापकर्मफलानुबन्धः । तस्य अतितरणं भगवत्प्रीतिकारितमिति सिद्धम् । "यत्करोषि यदश्नासी"त्याद्यपि- स्मर्तव्यम् । मोक्षधर्मे -

"काम्यनैमित्तिकाजस्रा याज्ञिकाः परमक्रियाः ।
सर्वं सात्वतमास्थाय विधिंचक्रे समाहितः ॥

इति अग्निहोत्रदर्शपूर्णमाससोमयागादीनां श्रौतानां कर्मणां सात्वतशास्त्रोक्त- मार्गेण मूलमन्त्रजपपूर्वकं कर्तव्यत्वं सिद्धम् ।

"सात्वतं विधिमास्थाय प्राक्सूरिसुखनिस्सृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥

पितॄनृषींश्च विप्रांश्च संविभज्याश्रितांश्च सः ।
शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः ॥

सर्वभावेन भक्तस्सन् देवदेवं जनार्दनम् ।
अनादि मध्य निधनं लोककर्तारमव्ययम् ॥"

5

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति श्लोकत्रयेण औपासनवैश्वदेवमहायज्ञदर्शादिश्राद्धानां स्मार्तानां कर्मणामपि भगवदाराधनत्वेन पाञ्चरात्रोक्तविधिना कर्तव्यत्वमुक्तम् । तत्रैवान्यत्र-

"ते कार्तयुगधर्माणः भागाः परमसंस्कृताः ।
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् ॥

याः क्रियाः संप्रयुक्ताःस्युः एकान्तगत बुद्धिभिः ।
तत्सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥

नारायणपरा वेदाः यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरागतिः ॥

नारायणपरं सत्यं व्रतं नारायणाश्रयं ।
नारायणपरो धर्मः पुनरावृत्ति दुर्लभः ॥

प्रवृत्तिलक्षणश्चैव धर्मोनारायणात्मकः ।
येकेचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वतः ॥

दानानि च प्रयच्छन्ति तप्यन्ति च तपो महत् ।
सर्वेषामाश्रयो विष्णुः ऐश्वरं सर्गमास्थितः ॥

सर्वभूत कृतावासो वासुदेवोऽपिचोच्यते ।"

इत्यादिभिः श्लोकैर्नारायणध्यानपूर्वकं तदाराधनत्वेन यज्ञादीनां कर्तव्यत्वमुक्तम् । परमसंस्कृता इति परमेण मन्त्रेणाष्टाक्षरेण द्वादशाक्षरेण वा संस्कृता इत्यर्थः । गीतायाञ्च "काम्यानां कर्मणा" मित्यारभ्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानन्तपश्चैव पावनानि मनीषिणाम् ॥

एतान्यपितु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीतिमे पार्थ निश्चितं मतमुत्तमम् ॥

नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वाफलञ्चैव स त्यागस्सात्त्विकोमतः" ॥

इति त्यागस्य त्रैविध्यमुक्तम् । कर्मजन्यं स्वर्गादिफलं मम न स्यादिति फलत्यागः । फलसाधनतया मदीयमिदं कर्मेति कर्मणि मदीयतायाः परित्यागः कर्मविषयस्त्यागः स एव सङ्गत्यागः । सर्वेश्वरे कर्तृत्वानुसन्धानेन आत्मनः कर्तृतात्यागः कर्तृविषयस्त्यागः । एवं फलसङ्ग-कर्तृत्व त्यागपूर्वकं नित्यनैमित्तिकं वर्णाश्रमविहितं कर्म ब्रह्माराधनरूपतया-कार्यं स्वयं प्रयोजनमिति मत्वा सङ्गं कर्मणि ममतां फलञ्च त्यक्त्वा-यत्क्रियते तस्यैव सात्त्विकत्यागत्वादेवमेव कार्यमिति अष्टादशाध्याये पूर्वषट्क मध्यमषट्कोत्तमषट्केषु च सर्वत्रगीताभाष्ये रामानुजाचार्यै-स्सिद्धान्तितम् । काम्यकर्मणामपि भगवदाराधनत्वेनानुष्ठितानां मोक्ष एव फलमिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्" ॥

इति श्लोकभाष्येऽप्युक्तम्। 'सर्वधर्मान्परित्यज्ये'ति चरमश्लोकभाष्येऽपि परित्यज्येतिपदेन फल, कर्म, सङ्गकर्तृत्वत्याग एवोक्तः इत्युच्यते न कर्मस्वरूपत्यागःउक्त इति। उक्तत्यागपूर्वकं यथाधिकारं कर्मयोग, ज्ञानयोग, भक्तियोगान्कुर्वाण एव मामेकमेव कर्तारमाराध्यं प्राप्यमुपायश्च व्रज अनुसन्धत्स्वेति। एष एव धर्माणां शास्त्रीयः परित्यागः इत्युक्त्वा, एवं वर्तमानं त्वां मत्प्राप्तिविरोध्यनादिकाल-सञ्चितप्रारब्धरूपपापेभ्यो मोक्षयिष्यामि माशुच इति। अथवा भक्तियोगारम्भविरोध्यनादिकालसञ्चितनानाविधानन्तपापानुगुणप्रायश्चित्तरूप कृच्छ्रचान्द्रायणकूश्माण्डवैश्वानरीवातवतीपवित्रेष्टि त्रिवृदग्निष्टुदग्निष्टो-मादिकान् सर्वधर्मान्परित्यज्य भक्तियोगारम्भसिद्ध्यर्थं मामेक-मनालोचितविशेषाशेषलोकशरण्यं शरणं प्रपद्यस्व। भक्त्यारम्भ-विरोधिपापेभ्यो मोक्षयिष्यामि माशुच इति द्वेधाव्याख्यातत्वात्। पूर्वव्याख्यानेन नित्यनैमित्तिककर्मणां कर्तव्यत्वं, उत्तरव्याख्यानेन प्रतिपदोक्तप्रायश्चित्तकरणासमर्थस्य भगवच्छरणव्रजनमुक्तम्। तस्मा द्भगवद्ध्यानपूर्वकं भगवदाराधनत्वेन नित्यनैमित्तिककाम्यकर्मणां श्रौतानां स्मार्तानां सात्वत शास्त्रोक्तमार्गेण कर्तव्यत्वं सिद्धम्। सात्वतशास्त्रविधिश्च भारते तत्र तत्र किञ्चित्सूचितः। मनुस्मृतौ

"अभ्यर्चयन्पितृन्देवान् पठन् जुह्वन्बलिं ददन्।
ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्त्रैरेव मन्त्रार्थास्मर्तव्या इति न्यायात् स्मरेदिति विधानात् मन्त्रेण विना स्मरणासंभवात् अनुस्मृत्य ध्यानारंभावसानयोः द्वादशाष्टाक्षरयोरुपात्तत्वादुपक्रमोपसंहाराधिकरणन्यायेन तन्मन्त्रेण भगवन्तं स्मृत्वाऽभ्यर्चनादिकं कुर्यात्। पठन् - वेदाध्ययनं कुर्वन् जुह्वन् - अग्निहोत्रादिकमुज्ज्वलन् ज्वलयन्सायं प्रातरुद्धराहवनीयमिति ज्वलन्तमुद्धरेदिति वचनादग्न्युद्बोधने अन्वाधानादिषु च काष्ठैर्मन्त्रेण प्रज्वलनेच मन्त्रजपपूर्वकं नारायणस्स्मर्तव्यः। विष्णुपुराणे—

"वासुदेवे मनो यस्य जपहोमार्चनादिषु।
तस्यान्तरा यो मैत्रेय देवेन्द्रत्वादिकं फलम्॥

इत्युक्तत्वात् मनसो निश्चलत्वात् मन्त्रोच्चारणे मन्त्रार्थस्य कृत्स्नस्य झटित्युपस्थितत्वात् तद्ध्यानं सम्यक् सङ्गच्छते। जपाभावे तु यत्नात्स्मृतिरिति मन्त्रजपएव ज्यायान्। ननु वैदिकमन्त्रोच्चारणकाले मन्त्रान्तरजपस्य निषिद्धत्वाद्दुष्करत्वाच्च कथं तज्जप इति चेत् उच्यते। "प्रत्यगाशिषो मन्त्रान् जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयते" इति सूत्रादकरणमन्त्रोपस्थानानुमन्त्रणस्य विहितत्वत् यागजन्यफलभोक्तृत्वाद्यजमानस्य उद्गीथोपासने साम्नोऽधिकस्यापि प्रणवस्योपासनविधिबलात् यथोद्गानं तद्वदत्रापि प्रपन्नानां सात्वतशास्त्रविधिबलात् भारतादिविधिबलाच्च यजमानेन मूलमन्त्रजपपूर्वविष्णुस्मृतिपूर्वकं याजमानमन्त्रादेशत्यागादीनां वचनेन न कोऽपि विरोधः। अध्वर्योरपि 'अग्न्यादिकं यज' इत्युक्त्वा मूलमन्त्रं जपतो वषट्कारकाले हविःप्रक्षेपस्य सुकरत्वात्तेनापि जपितव्यम्। अनुगीतायां अध्वर्युयतिसंवादे भगवन् भगवद्बुद्ध्याप्रतिबुद्धोऽब्रवीम्यहम्। व्रतं ममक्रतुं कर्तुं नापराधोऽस्ति मे द्विज" इत्युक्त्या तस्यपि भगवद्ध्यान मावश्यकम्। उद्गातुरुद्गीयो-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पासनवन् मन्त्रजपपूर्वकञ्चेद्ध्यानं सुकरमित्युक्तम्। होतुरपि पुरोनुवाक्यो-क्त्यनन्तरं "ये यजामहात्पूर्वं मन्त्रजपस्सुकरः। ब्रह्मणो निर्व्यापरत्वात्सर्वदा सुकरः। एवं वैदिकमन्त्रप्रयोगाविरोधेन मूलमन्त्रजपस्य कर्तुं शक्यत्वाद-विरोधाच्च। वैखानससूत्रे चाधाने 'प्राणायामशतंकुर्याद्ध्यायन्नारायण'मिति। अग्निहोत्रे च 'समिधमाधाय प्राणायामं कुर्यात्'। ध्यायन्नारायणमिति हुत्वा भूमानं विष्णुं ध्यायेदिति। दर्शपूर्णमासादिषु आदिमध्यावसानेषु वषट्कारे च विष्णुं ध्यायेदिति। प्रायश्चित्तप्रश्ने च अनाज्ञातेविशेषे ध्यानन्नारायणस्य तज्जपेज्याहोमश्च भिन्नात्मनीति तत्र तत्र बहुधा नारायणध्यानस्योक्तत्वात्। मन्वादिधर्मशास्त्राणां प्रतिष्ठाविधायक वैखानस शास्त्रस्य च पञ्चरात्रमूलत्वात् आश्वमेधिकवैष्णवधर्मशास्त्रस्य च प्रत्यक्ष पठ्यमान पञ्चरात्रमूलत्वेन दृष्टत्वात्। पञ्चरात्रे द्वादशाष्टाक्षरयोर्नितरां प्रशस्तत्वात् तथैव मोक्षधर्मे वैष्णव धर्मशास्त्रे च भगवता वेदव्यासेन तयोरत्यन्तस्तुतिपूर्वकं सर्वथाजपविधानाच्च। ततश्च ताप, पुण्ड्र, नाम, मन्त्र, याग, संस्तुतैरच्छिद्रपञ्चकालपरायणैर्द्वादशा-ष्टाक्षरतत्त्वज्ञैश्चतुर्व्यूहविभागज्ञैश्चक्राब्जमण्डलदीक्षितैरर्थपञ्चकतत्त्वज्ञैः परम भागवतैरेकान्तिभिः स्वयंप्रयोजनतया भगवदाराधनत्वेन फलकर्मसङ्गकर्तृत्व-त्यागपूर्वकं नित्यनैमित्तिककाम्यकर्मजालं सर्वदा द्वादशाष्टाक्षरजपयुक्त-विष्णुध्यानपूर्वकं कर्तव्यमिति निश्चयः। तदुक्तं पाञ्चरात्रे पाद्मसंहितायां सिद्धान्तिनियमाध्याये औपगायनप्रभृत्यष्टसहस्रमुनिं प्रति ब्रह्मवचनम् —

पञ्चरात्रोक्तमार्गेषु मन्त्रसिद्धान्तवर्त्मना ।<br>
दीक्षयित्वा यथान्यायं चक्रवारिजमण्डले ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

आहतान् दीक्षितान् ब्रह्म कर्तव्यमिदमादिशत् ।
काण्वां माध्यन्दिनां शाखां शाखास्वभ्यर्हिते उभे ॥

अधीध्वं मूलशाखे ते निषेकादींश्च संस्कृतीः ।
ताभ्यामेवानुतिष्ठध्वं सोमयागादि कर्म च ॥

भगवन्मन्त्रसहितं तत्समाराधनात्मकम् ।
कर्तव्यत्वेन वेदोक्तमित्येवं फलवर्जितम् ॥

कुरुध्वमिति कुर्वाणैः कर्मनिश्श्रेयसं फलम् ।
प्राप्यते तेन युष्माभिः मन्त्रसिद्धान्तवर्त्मना ॥

पञ्चकालं यथाशास्त्रं गृहे वा मन्दिरेऽपि वा ।
भगवत्पूजनं कार्यं अद्यप्रभृति नान्यथा ॥

यूयं भागवतास्तेन गता भगवदर्चनम् ।
भगवद्भक्तिरिति वा करणीयश्चतुर्मुख ॥

नाम्ना भागवतास्सन्तो दीक्षयित्वा यथाविधि ।
यथोक्तं कर्म कुर्वाणाः प्राप्नुवन्ति परं पदम् ॥

शाखान्तरेषु मन्त्राणां पावनाः परमर्षयः ।
तानभ्यधीत्यतैर्मन्त्रैः अर्चयध्वमधोक्षजम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परमर्षय मुख्यमन्त्राः । तस्यामेवाष्टाक्षरकल्पाध्याये अष्टाक्षरजपपूर्वकं दर्शे माघमासेच श्राद्धं विस्तरेणोक्त्वा कृच्छ्रचान्द्रायणैकादश्युपवासादिषु अष्टाक्षरेणाराधनमुक्त्वा अग्निहोत्रादिसोमान्तं यज्ञादिष्वपि मूलमन्त्रेणाराधनं विहितम् ।

"अग्निहोत्रादिकान् यज्ञान् जपन्नष्टाक्षरंसुधीः ।
कुर्वन् तत्तच्छतगुणं फलमाप्नोति मन्त्रवित् ॥

तीर्थाभिगमन पवित्राद्युत्सवेषु मन्त्रजपात्फलानन्त्यमुक्त्वा पुनश्चविहितम् ।

"यस्य यस्य च धर्मस्य फलं यद्यदोरितम् ।
तस्यतस्य फलन्तत्तत् मन्त्राच्छतगुणं लभेत् ॥

इति । तदुक्तं हारीतस्मृतौ

"व्यापकानाञ्च सर्वेषां ज्यायानष्टाक्षरो मनुः ।
अष्टाक्षरस्य जप्तातु साक्षान्नारायणः स्वयम् ॥
सन्यासं च समुद्रं च सर्षिछन्दोऽधिदैवतम् ।
सदोक्षाविधिसन्ध्यानं सार्धंमन्त्रयुतं हृतम् ॥
स्नात्वा शुद्धः प्रसन्नात्मा कृतकृत्यो जनार्दनम् ।
मनसाप्यर्चयित्वा वा जपेन्मन्त्रं सदाबुधः ॥
दानप्रतिग्रहौ यागं स्वाध्यायं पितृतर्पणम् ॥
पितुःक्रियाऽष्टाक्षरस्य जप्ताकुर्यादतन्द्रितः ॥ इति ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उक्तञ्च श्रीपाञ्चरात्ररक्षायामाचार्यैः

" निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैव कारितम् ।
उपायतां परित्यज्य न्यसेद्देवे तु तां सुधीः " ॥

इति । इदं तावत् आप्रबोधादानिशान्तमनुष्ठीयमानेषु सर्वेषु कर्मसु न विस्मर्तव्यम् । समयाचारनियमाध्याये वैष्णवधर्मशास्त्रादिषु कथितं परमैकान्तिनां विशेषकर्तव्यञ्च सर्वं यथावदवगन्तव्यम् । सर्वेषु कर्मारम्भेषु भगवच्छास्त्राद्युक्तः तत्तन्मन्त्रो भगवानेवेत्यादिकं भाष्यकारनित्योक्तवाक्यञ्च पठितव्यम् । अन्ते च सर्वं स्वनियाम्येत्यादिक्रमेण समन्त्रकं भगवति समर्पणीयमित्येतत्सर्वं हृदि निधाय आनुशासनिकपर्वणि यज्ञपुरुषमाहात्म्येकर्मणि कर्मण्यवान्तरकर्मसु अपि अज्यपुरोडाशसोमयूपादिषु च कृष्णबुद्ध्या कर्तव्यत्वमुक्तम् ।

" यूपं विष्णुं वासुदेवं विजानन्,
सर्वान् विप्रान्बोधतेतत्वदर्शी ।
विष्णुं क्रान्तं वासुदेवं विजानन्,
ब्राह्मणो ब्रह्मण एति स्थानम् ॥

सर्वं वैष्णवं यज्ञमार्गे
चातुर्होत्रं वैष्णवं तत्र कृष्णः ।
सर्वैर्भावैरिज्यते सर्वकामैः
पुण्यान् लोकान् ब्राह्मणाः प्राप्नुवन्ति " ॥


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पुण्यलोक :– भगवल्लोकः । पूजायां बहुवचनम् । यद्वा केशवादिव्यूह-लोका अनन्ताः ।

"सोमं सद्भावाद्ये च जातं पिबन्ति
दीप्तं कर्म ये विदानाश्चरन्ति ।
एकान्तमिष्टौ चिन्तयन्तोदिविस्था-
स्तेवैपन्थानं प्राप्नुवन्तिव्रतज्ञाः ॥

सद्भावात्-ब्रह्मबुद्ध्या ओं तत्सदिति ब्रह्मणस्त्रिविधः स्मृत इत्युक्तेः "आज्यं यज्ञं स्रुक् स्रुवौ यज्ञदाता इच्छापत्नी पत्नीशाला हवींषि इध्मापुरोडाशं सर्वदा होतृकर्ता कृत्स्नंविष्णुं संविजानँस्तमेति" । पत्नीशाला - प्राग्वंशः ।

"योगे योगे कर्मणाञ्चाभिहारे
युक्तेवैताने कर्मणि ब्राह्मणोस्य ।
पुष्ट्यर्थेषु प्राप्नुयात्सर्वसिद्धिं
शान्त्यर्थेषु प्राप्नुयात्सर्वशान्तिम् ॥

कर्मणां योगः प्रारंभः । अभिहारः – समाप्तिः । अस्य विष्णोस्संबन्धिनि वैताने कर्मणि इत्यन्वयः । पुष्ट्यर्थाजयादयः । उपहोमाः शान्त्यर्थाः । प्रायश्चित्तानि एकाक्षरद्व्यक्षरमेकमेव यदा यजन्ते नियताः प्रतीताः दृष्ट्वा मनसि अर्चयित्वा स विप्राः सतां मार्गं तद्ध्रुवंसंभजन्ते । एकाक्षरं प्रणवः ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरेदित्युक्तेः । द्व्यक्षरं वषट्कारः । द्व्यक्षरो वषट्कार इति श्रुतेः । 'विश्वं विष्णुर्वषट्कारः' 'प्राणदः प्रणवः पण' इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वषट्कारप्रणवरूपत्वं विष्णोर्विज्ञायते । अत्र प्रणववषट्कारयोः मध्यगानि श्रावयास्तुश्रौपडूयज ये यजामह इति चतुर्दशाक्षराण्यपि गृह्यन्ते । प्रत्याहार ग्रहणवत् ।

" एको वेदो ब्राह्मणानां बभूव
चतुष्पादस्त्रैगुणोब्रह्मशीर्षः ।
पादं पादं ब्राह्मणावेदमाहुः
त्रेताकाले तं च तं विद्धिशीर्षम् " ॥

चतुष्पादः – ऋग्यजुस्सामाथर्वरूपचतुष्टय पादवान् । त्रैगुणः – सत्वरजस्तमोगुणात्मकफलवत् । ब्रह्माराधनरूपप्रजापुत्राद्यन्नादिलिप्सारूप, आभिचारादिरूप त्रिविधकर्मबोधको ब्रह्मशीर्षः - ब्रह्मकाण्डशीर्षः । त्रेताकाले यज्ञकाले अध्वर्यूद्गातृहोतृकार्यवशात् यजुस्साम ऋग्वेदव्यवहारःप्राप्तः । [तं] ब्रह्मकाण्डरूपशीर्षं तं विद्धि – कृष्णं जानीहीत्यर्थः ।

" सर्वे देवा वासुदेवं यजन्ते
ततो बुद्ध्या मार्गमाणास्तनूनाम् ।
सर्वान्कामान् प्राप्नुवन्ते विशालान्
त्रैलोक्येऽस्मिन्कृष्णनामाभिधानात् ॥

तनूनां अग्नीन्द्रादितनूनां । सप्तम्यर्थे षष्ठी । तनुषु कृष्णनामाभिधानात् । 'यो देवानां नामधा' इति श्रुत्या सर्वेषां नामरूपव्याकृतत्वाच्च ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'नाम नामैव नाम मे' 'नाम वै प्रजापति'रिति श्रुत्या चाग्नीन्द्रादिनाम्नां कृष्णनामत्वेनाभिधानात् । एवं बुद्ध्या मार्गमाणा वासुदेवं यजन्त इत्यर्थः । 'विष्णुः सर्वा देवता' इत्यैतरेयकश्रुतेः

"ज्योतींषि शुक्लानि च यानि लोके
त्रयोलोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्चपञ्च
सर्वे देवा देवकी पुत्र एव ॥

सर्वेवेदास्सर्ववेद्यास्सशास्त्राः
सर्वेयज्ञास्सर्वयज्ञश्चकृष्णः ।
विदुःकृष्णं ब्राह्मणास्तत्त्वतो ये
तेषां राजन्सर्वयज्ञास्समाप्ताः ॥

ज्ञेयोयोगीब्राह्मणैर्वेदतत्वै-
रारण्यकैस्सैषकृष्णःप्रभुत्वात् ।
सर्वान् यज्ञान् ब्राह्मणान् ब्रह्मचैव
व्याप्यातिष्टद्देवदेवस्त्रिलोके ॥

"स एष देवश्शक्रमीशं यजमानं प्रीत्या प्राहुः' 'ऋतुयष्टारमग्र्यं-यजमानं यजमानं शक्रमाहुः" शक्रमिन्द्रमाहुः "एष वा एतर्हीन्द्रो यो यजते' इति श्रुतेः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नमश्चक्रे वेद वेदार्थकत्वात्
भक्तो भक्त्या शुद्धभावः प्रधानः ।
श्रद्धात्यागं निर्वृतिञ्चापि पूजां
सत्यं धर्मं य कृतञ्चाभ्युपेति ॥

कामक्रोधौ त्यज्यसर्वेषु तुल्यः
श्रद्धापूतस्सर्वयज्ञेषु योग्यः ॥

इति कृष्णद्ध्यानपूर्वकं विष्णुरूपसोमाज्यादिद्रव्यैः कृष्णयजनं परमैकान्तिनां सुस्पष्टं विहितम् । भगवदाराधनरूपेभ्यः स्मार्तपौराणिकागमशास्त्रदानकाण्डव्रतकाण्डकृच्छ्रचान्द्रायणादिविधायकशास्त्र - विहितकर्मभ्यः श्रौतकर्मणां भगवतो नित्यनिरवधिकनिरतिशय प्रीतिकरत्वात् तेषां महाराधनरूपत्वम् । अत एव "महाक्रतुर्महायज्वा महायज्ञो महा हवि"रिति भगवतो नामान्युक्तानि । तापपुण्ड्रादिकृतलक्षणैरेकान्तिभिर्भगवन्मन्त्रसहिततदाराधनत्वेन कृतस्य अग्निहोत्रादिक्रतोर्महाक्रतुत्वम् । तथाविधयष्टुरेकान्तिनो महायज्वत्वम् । तथाविधसोमयागस्य महायज्ञत्वम् । तत्रत्य पुरोडाशपशुसोमाज्यादीनां महाहविष्ट्वम् । एकान्तिभिरिज्यस्य विष्णोर्महेज्यत्वम् । अन्यैस्तु इज्यत्वम् । 'यज्ञ इज्यो महेज्यश्चे'ति पृथगुपादानात् । तद्रूपत्वात् तदात्मत्वात् कृष्णस्यापि महाक्रत्वादीनां वाच्यत्वम् । "ज्ञानीत्वात्मैव मे मत"मित्युक्तेः 'यज्ञो यज्ञपतिर्यज्वे'त्यादिः आर्तार्थार्थिजिज्ञासुविषयः । ब्रह्मरुद्रेन्द्रादिभ्यः फलेच्छुविषय इति केचित् । महाक्रत्वादिस्तु प्रतिबुद्धविषय एवेति विवेकः । अत एव ॰

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

" येऽप्यन्यदेवताभक्ताः यजन्तेश्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् " ॥

इति फलार्थिभिर्ब्रह्मरुद्रेन्द्राद्याराधकैरनुष्ठितस्य यज्ञस्याविधिपूर्वकत्वम् । " चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः " " सर्वे वेदा यत्पदमामनन्ति " " सर्वे वेदा यत्रैकं भवन्ति " सर्वे होतारो यत्रैकं भवन्ति । समानसीन आत्माजनानामि'त्यादि वचनात् प्रतर्दनविद्यान्यायेन प्रकारवाचकशब्दानां प्रकारिपर्यन्तत्व नियमाच्च विधीनां परमात्मपर्यन्ततया तद्बुद्धिं विना अनुष्ठितत्वादुक्तम् । विशिष्टान्तर्गतविशेषणमात्रपर्यन्तसन्नबुद्धितया तेषां स्वर्गाद्यल्पास्थिरफलभोगवत्त्वञ्च । 'यान्ति मद्याजिनोऽपिमामि'ति स्वपर्यन्त-बुद्धिभिरैकान्तिभिरनुष्ठितयज्ञस्यतु स्वप्रापकत्वात् स्वपदं प्राप्तानां नित्य-निरवद्यनिरतिशयपुनरावृत्तिरहितफलभोगवत्त्वञ्चेति भगवता भाष्य-कारेण उक्तम् । " विष्णुर्यज्ञो " " यज्ञो वै विष्णु " रित्यादिश्रुतिभिः यज्ञस्वरूपत्वावगमात् । " सत्य मिथ्यावृषेदसि ऋतस्य योगे विश्वस्य मूर्धा " सत्यस्यसत्यं अनुयत्र युज्यते । ऋजुकर्म सत्यं सुचरितं । सत्यएवैनास्सुकृतस्य लोके सादयति । स सत्ये प्रतितिष्ठति । वाग्वै यज्ञो वाच्येव तद्यज्ञमन्ततः प्रतिष्ठापयति " इत्यादिना सत्यस्वरूपत्वात् । यज्ञानां वेदात्मकत्वेन ज्ञानस्वरूपत्वात् । ज्योतिष्टोम द्वादशाहयोः स्तोमतः स्वरूपतश्च छन्दोगकल्पसूत्रकृता भगवता गार्ग्यमशकाचार्येण आनन्त्यस्योक्त-त्वात् । " सत्यं ज्ञानमनन्तं ब्रह्म "ति ब्रह्मलक्षणसद्भावात् यज्ञस्यविष्णो-स्सच्चिदानन्दब्रह्मस्वरूपत्वम् । " तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानिजज्ञिरे " इत्यारभ्य 'तथा लोकां अकल्पय "न्नित्यन्तेन ऋग्यजुस्सामछन्दसां

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चेतनाचेतनरूप जगतश्च यज्ञपुरुषात्सृष्टेः श्रुतत्वात् 'सर्वाणिरूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन् यदास्ते' इति नामरूप व्याकृतत्वोक्तेः। 'उतामृतत्वस्येशान' इति मोक्षप्रदत्वोक्तेः । 'पादोऽस्य विश्वाभूतानि। त्रिपादस्यामृतन्दिवि'। इति लीलाविभूति नित्यविभूतीश्वरत्वोक्तेः। 'ह्रीश्च [श्रीश्च] ते लक्ष्मीश्च पत्न्यौ इति तैत्तरीयकाण्वशाखोक्तरीत्या श्रीलक्ष्मीरूपवाग्दक्षिणापतित्वोक्तेः"। "ऋचस्सामानि यजूंषि। सा हि श्री स्मृता सताम्' 'श्रीर्वै वाचोऽग्रच' इत्यादिभिः श्रियो वाग्रूपत्वम्। 'साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्म्यैव पशूनवरुन्धे' इति श्रुत्या लक्ष्म्याः दक्षिणात्मक गोरूपत्वं। "यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः" दक्षिणाभिस्सह धन्योऽस्मि आश्चर्योऽस्मीति धन्याश्चर्योपाख्यानोक्तरीत्या वागात्मक श्री दक्षिणात्मकलक्ष्मीपतित्वात् च। "यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसंभवः।" इति अन्नोत्पत्तिहेतुत्वेन सर्वत्रोक्तत्वात्। आदिकाले यस्माज्जगत्सृष्टिः प्रलयकाले तस्मिन्नेवकारणे सर्वशास्त्रेषु लयः प्रतिपादनात्। एवं यज्ञपुरुषस्य ब्रह्मलक्षणसद्भावात् तदनुष्ठानं ब्रह्मोपासनमेव। अत एव यज्ञमध्ये "परं ब्रह्म दृश्यत" इति सनत्सुजातेन उद्योगपर्वणि उक्तम्।

"न पृथिव्यां तिष्ठति नान्तरिक्षे
नैतत्समुद्रे सलिलं बिभर्ति'।
न तारकासु न च विद्युदाश्रितं
नचाभ्रेषे दृश्यते रूपमस्य ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न चापि वायौ न च देवतासु
नचन्द्रे वा दृश्यते नोतसूर्ये ।
नेवर्क्षु तन्नैवयजुर्ष्वथर्वसु
नचापिदृश्यत्यमलेषु सामसु ॥

राथन्तरे बार्हते वापिराजन्
महाव्रतस्यात्मानि दृश्यते तत्" ॥ इति ।

राथन्तरो - रथन्तरपृष्ठो यज्ञः । बार्हतः - बृहत्पृष्ठो यज्ञः । सर्वयज्ञानां रथन्तरबृहत्तदुभयपृष्ठत्वात् महाव्रतस्य तत्पृष्ठत्वात् । तस्य अत्मनि राजन् - साम्नि सहस्तोभे बृहतीसहस्रे च तद्ब्रह्म दृश्यत इति पृथङ्निर्देशः । एवं यज्ञमध्य एव ब्रह्मणो भगवतो दृश्यमानत्वात् । हस्तिगिरि-माहात्म्ये च - "धातुरुत्तरवेद्यन्तः प्रादुरासीज्जनार्दनः" इति यज्ञमध्ये भगवदाविर्भावदर्शनाच्च । यज्ञाराध्यत्वं भगवतः तदाराधनत्वं यज्ञस्य तदाराधकत्वं पुरुषस्य स्वभावत एवेति श्रौतानां स्मार्तानाञ्चकर्मणां भगवदाराधनत्वेन परमैकान्तिभिः कार्यत्वमितिनिश्चयः । आहिताग्निः सोमयाजी वा परमैकान्ती अनुदितहोमी स्नात्वाऽग्निहोत्रं कृत्वा सन्ध्योपासनादिकं कुर्यात् । उदितहोमीतु स्नात्वा सन्ध्यामुपास्य यथाशक्ति गायत्रीं मूलमन्त्रञ्च जपित्वाऽभ्युक्षणाम्बु गृहीत्वो-दयात्पूर्वं मन्दिरं प्रविश्य भगवद्गृहं अग्निहोत्रगृहञ्च प्रोक्ष्य भगवन्तं प्रणम्य "स्वशेषभूतेन मये"तिश्लोकमुक्त्वा कृतञ्चकरिष्यामीत्याद्यग्निहोत्रेज्यया भगवतो-बलेनेत्याद्यनुसन्धाय "शं नो मित्र' इत्यनुवाकं जपित्वा अष्टाविंशति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शतकृत्वः प्रणवं द्वात्रिंशत्कृत्वो मूलमन्त्रञ्च जपन् प्राणानायम्य "देवस्यत्वा सवितुः प्रसवे पूष्णो हस्ताभ्यां" आचार्यहस्तेन आचार्यवचसा आचार्यमनसा प्रातरग्निहोत्रं सायमग्निहोत्रं वा होष्यामीति सङ्कल्प्य 'धृष्टिरसीत्या'दिकुर्यात् । अनन्तगरुडविष्वक्सेनाद्यनन्तपरिजनपरिच्छेदैर्ब्रह्मादिभिर्देवैः ऋग्यजुस्सामोपनिषद्भिः श्रिया वाग्देव्या च स्तूयमान भगवन् श्रियःपते 'उद्बुद्ध्यस्वे'त्युक्त्वा "उद्बुद्ध्यस्वाग्ने" इत्यादिकुर्यात् । यजमानः ओं नमो नारायणाय ओमुद्धरेत्यादि स्पृशेत् 'वाचात्वे'त्यादि त्वया विनिदधामि "ओं भूर्भुवस्सुवरों नमो नारायणाय विष्णुरूपाहवनीये विष्णुं अग्निपुरुषं प्रतिष्ठापयामी"ति प्रणीय मार्जनादि रङ्गवल्ल्यन्तं कृत्वा मूलमन्त्रमुच्चरन्सुगन्धिश्वेतपुष्पैस्तुलसीभिर्वा आयतनानि वेदिञ्चालंकृत्य उदिते सन्ध्यामुपस्थाय 'इदं विष्णु रित्युक्त्वा अथर्वशिरस्संज्ञ नारायणोपनिषदा पूर्वोक्तपुरुषसूक्ताभ्यां 'हिरण्यवर्णा'मिति श्रीसूक्तेन 'चित्तिस्स्रुगि'त्यादिभिर्होतृभि'र्विष्णोर्नुक'मिति विष्णुसूक्तेन विष्णुरूपानग्नीनुपस्थाय 'ओं नमो नारायणाये'ति जपित्वा 'विश्वदानी'मित्यादि जपन् कर्माणि कृत्वा पूषासि, 'अयक्ष्मावः' इत्यारभ्य' तद्यजमानममृतत्वे दधात्वि"त्यन्तमुक्त्वा "ओं नमो नारायणाय भगवन्निदं हविर्जुषस्व" 'विष्णो हव्यं रक्षस्वेति कुर्यात् । पयसा मुमुक्षोः श्रीकामस्य वेति वैखानससूत्रवचनात्प्रपन्नानां पयसाऽग्निहोत्रं नित्यमेव । "अग्नेर्घृतं विष्णोस्तण्डुला" इति श्रुत्या तण्डुलैर्वा अन्येषामन्यैर्द्रव्यैर्विकल्पः । हविष्यधिकृतेऽग्निपुरुषं यज्ञपुरुषञ्च ध्यायेत् । 'ओं नमो नारायणाय हविर्देवानामसि' 'विद्युदसी'त्याद्यभिक्रम्य ओं तत् सत् भूर्भुवस्वरों नमो नारायणाय ओं सूर्योज्योतिः ओमग्निर्ज्योतिरिति जुहुयात् । एवमुत्तराहुतिं हुत्वा "आश्रावयास्तु श्रौषड्यज



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ये यजामहे" वौषट्नमः। 'आर्द्रं ज्वलती'त्यादितः 'अहमेवाहम्माञ्जुहोमि-स्वाहे'त्यन्तं त्वमस्माकं तवस्मासीत्युक्त्वा - "भगवाननेन हविषा प्रीयतां मे जनार्दनः। चतुर्भिश्च चतुर्भिश्चेत्युक्त्वा हुत्वा स्रुचमुद्गृह्येत्यादिकुर्यात्। अपरहोमादयोऽपि मूलमन्त्रपूर्वकाः कार्याः। ओं तत्सत्भूर्भुवस्वरों 'नमो नारायणाय' 'उपप्रयन्त' इत्याद्युपस्थानम्। अन्ते च मूलमन्त्रजपः। 'पूषासि' ओं नमो नारायणायेति हविः प्राशनम्। 'सर्पेभ्य' इत्यादिषु सर्वत्रोद्देशत्यागात्पूर्वं मूलमन्त्रजपः। प्रदक्षिणानन्तरं ब्रह्मार्पणम्। 'नमस्ते गार्हपत्याय' 'नमो ब्रह्मण्यदेवाय' यज्ञेशाच्युतगोविन्द' इति श्लोकत्रयं 'भूर्भुवस्सुवस्तार' इत्यारभ्य 'सर्वप्रहरणायुधों नम' इत्यन्तमुक्त्वा मूलमन्त्रेण द्वयेन च नमस्कृत्य अनेनाग्निहोत्रेण स्त्रैनैव कृतेन स्वाराधनेन भगवान् श्रीमन्नारायणः प्रीयतामिति भूमौ जलं निक्षेपेत्। एवं दर्शपूर्णमासयोरप्यारम्भे भगवन् यज्ञपुरुषश्रियःपते, वाक्पते भवान् यज्ञः, भवन्तं यक्ष्यामहे, भवते यज्ञः क्रियते, भवत एव तुभ्यमयं यज्ञः, आदिकाले यज्ञ उत्पन्न, भवत एवायं यज्ञ अन्ते भवति "यज्ञे वाचि श्रियां यज्ञं प्रतिष्ठापयाम इत्यनुसन्धाय स्वशेषभूतेनेत्यादि अग्निहोत्रादिवत्सङ्कल्पं कुर्यात्।

व्रतोपनयनानन्तरं पूर्वं नारायणोपनिषदादिजपःकार्यः। व्रतोपायने सायंप्रातर्दोहयोर्मूलमन्त्रजपःकार्यः। अपां प्रणयने ओं नमोनारायणाय 'भू रग्निश्चे'त्याद्यग्नये जुष्टं निर्वपामि' ओं नमो नारायणाय 'अग्निं होतारमिह' ओं नमो नारायणाय 'कस्त्वा युनक्ति' प्रोक्षणेऽवहननेऽधिवापे संवापे हविर्निर्देशे वेदिकरणे आज्यनिर्वापे आज्यग्रहणे बर्हिःप्रोक्षणे स्तरणे परिध्याधाने प्रस्तरनिधाने स्रुक्साधने हविरभिघारणे हविरञ्जने हविरासादने आसन्नाभि-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मर्शनान्ते सर्वत्र मूलमन्त्रजपपूर्वकं यजमानमन्त्रजपं कुर्यात् । अग्निहोत्रवत् अत्रापि अग्निपुरुषध्याने यज्ञपुरुषध्यानं यष्टव्यदेवतात्मकध्यानञ्चकृत्वा मूलमन्त्रेण ध्यात्वावाह्य मनसा अर्घ्यपाद्याचामनीयगन्धपुष्पधूपदीपादिकं समर्पयेत् । आनुशासनिके 'एकाक्षरं द्व्यक्षरमेवे' तिश्लोके दृष्ट्वा 'मनस्यर्च-यित्वा स विप्रा' इत्युक्तेः अत्रमानसार्चनमुक्तम् । ततः पञ्चोपनिषन्मन्त्रैः मूलमन्त्रेण च नमस्कृत्य तैरेवाग्निमभिमन्त्र्य वाग्यतः मूलमन्त्रं जपन् प्रयाजादिसमिष्टयजुरन्तं भगवन्तं ध्यायन् प्रतिवषट्कारं ओं तत् सत् भूर्भुवस्वरों नमो नारायणाय 'अग्नय इदं न मम । 'अग्नेरहं देवयज्यया इत्यादि याजमानमन्त्रान्जपन्नासीत । एवं विष्णुक्रमादि 'वृष्टिरसी'त्यन्तं भगवद्ध्यानपूर्वकं कृत्वा अनेन पौर्णमासेन दर्शेन वा स्वाराधनरूपेण स्वेनैव वेदात्मना वासुदेव, सङ्कर्षण, प्रद्युम्न, अनिरुद्धात्मकहोत्रध्वर्यु ब्रह्माग्नीध्ररूपेण स्वप्रीत्यर्थं स्वेनैवकृतेन मन्त्रलोपादिवर्जितेन 'श्रीजनार्दनः प्रीयता'मिति भूमौ जलं निक्षिप्य मूलमन्त्रं यथाशक्ति जपेत् । ततः कृष्णानुस्मरणम् ॥

पशुबन्धे मूलमन्त्रेण यूपं संस्पृश्य आज्येन अङ्क्त्वा यूपो-च्छ्रयणकाले मूलप्रभृतिचषालपर्यन्तं भूरादिसप्तलोकान् दशोत्तरावरणानि च ध्यात्वा चषाले वैकुण्ठदिव्यलोकदिव्यजनपददिव्यनगरदिव्य-विमानात्मकं परमपदं ध्यात्वा तदुपरि अतिरिक्तयूपाग्रे शेषभोगे श्रिया सह आसीनं श्रीविष्णुं ध्यायेत् । पशोरुपाकरणब्रह्मरन्ध्रान्निर्गमय्य अर्चिरादिमार्गेण भगवत्पादारविन्दप्राप्तिपूर्वकं नित्यकैङ्कर्यं प्रापयन् पशुं विसृज्य "पराङावर्तत" इत्यादिकुर्यात् । वपामासन्नात् द्वात्रिं-शत्कृत्वो मूलमन्त्रेणाभिमृश्य वपाहोमात् भगवन्तं ध्यायन्नासीत ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अङ्गयागे पशोरवदानानि मूलमन्त्रञ्जपन्नवद्येत् । अन्यत्सर्वंदर्शपूर्णमास वत् ॥

सोमारम्भो दर्शपूर्णमासारम्भवत् । वासा नवनीतदीक्षादिषु दर्भ पुञ्जीलपावने च मूलमन्त्रशिरस्कं भगवान्पवित्रमिति पवित्रमन्त्रं जपेत् । सोमक्रयादिसंस्कारेष्वपि मूलमन्त्रजपः । महारात्रे बुद्ध्वा आग्नीध्र हविर्धान स्रुक् वायव्य सदोऽभिमर्शनानि मूलमन्त्रेण यजमानः कृत्वा खरे पात्रसादनकाले पृथक्पृथक्पात्राणि मूलमन्त्रेणाभिमन्त्रयेत् । सुब्रह्मण्या-ह्वानकाले भगवन् इन्द्र श्रियःपते नारायण श्रिया सुब्रह्मण्यया वा देव्या सह नित्यैर्मुक्तैर्भागवतैर्ब्रह्मादिभिर्देवैः ऋषिभिःपितृभिः ऋग्यजुस्सा मोपनिषद्भिः दक्षिणारूपगोभिरन्यैश्च सह सोमं पातुं हवींषि स्वीकर्तुं स्तोत्रशस्त्रवषट्कारादिभिस्तूयमानस्सन् इह आगच्छ मां ऋत्विजः। यज्ञं सोमं हवींषि अन्यानि यज्ञीयद्रव्याणि सर्व्वं रक्ष रक्ष । इमानि महा-राधनद्रव्याणि महाराधने यज्ञं पुरुष शरीरपुरुष वेदपुरुष, छन्दः पुरुष यज्ञपुरुषअग्निपुरुष, वायुपुरुषादिन्यपुरुष महापुरुष, पुरुषोत्तम उत्तमपुरुष वसुदेव, विष्णो, स्वीकृत्य मां सपत्नीकं सयज्ञं सयाजकं सपशुं ससोमं यथाशक्ति दक्षिणा-सहितं फलसङ्गकर्तृत्वत्यागरूपज्ञानयुक्तं औपनिषद परमपुरुषाराधनयज्ञशीलं भगवति न्यस्तसमस्तात्मात्मीयरक्षणभरतत्फलं यथाविधिकर्मानुष्ठानासमर्थं यथा-कथञ्चित्भगवत्प्रीत्यर्थं भगवन्नित्याज्ञाकैंकर्यनिरतं भवतैव यजमानपत्नीयाजक हविस्सोमादिरूपेण भगवता वेदात्मना क्रियत इति सर्वदाऽनुसन्धातारं मां रक्षस्वेत्युक्त्वा मूलमन्त्रेण द्वयेन च मनसा प्रणम्य गृह्यमाणेषु ग्रहेषु प्रतिग्रहं "उपयाम गृहीतोऽसि ब्रह्मणेत्वा महस" ओं नमो नारायणायेति ग्रहण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सादनयांमूलमन्त्रं जपेत् । पञ्चहोत्रा ग्रहानभिमृश्य मूलमन्त्रं द्वादशाक्षर-विष्णुगायत्रीभिस्सर्वान्ग्रहानभिमृश्य सप्तहोतृहोमं वाग्रूपश्रियःपतिं वाचस्पतिं ब्रह्मत्वेन ध्यायन् हुत्वा समर्पणकाले ऋग्यजुस्सामाथर्वरूपिणीं यज्ञरूपां दक्षिणात्मिकां स्तोत्रशस्त्रमन्त्रस्वरूपां भगवतीं विष्णुवक्षस्थलरूपसदोनिवासिनीं नित्यानपायिनीं नीरक्षीरवत्पृथग्विभजनानर्हपरमात्मनारायणस्वरूपिणीं वाचन्देवीं श्रियं ध्यायेत् । प्रतिस्तोत्रं सोमयागादारभ्य भक्षणपर्यन्तं वाग्यतो मूलमन्त्रं जपन्नासीत । वपामार्जनान्ते ओंतत् सत्भूर्भुवस्सवरों नमो नरायणायेत्युक्त्वा "द्वौ समुद्रौ" इत्याद्युपस्थानान्ते मूलमन्त्रजपः । एवं माध्यन्दिन तृतीयसवनयोः गायत्रसामसु सवितृमण्ठलमध्यवर्ति सावित्रीरूपं ब्रह्म ध्यायेत् । पवमानेषु सोममण्डलमध्यस्थं अमृतमयं मोक्षप्रदं ब्रह्म ध्यायेत् । रथन्तरे वा बृहत्सामनि वा राजने वा स्तूयमानेषु सृष्टिस्थितिसंहारकर्तारं अनन्तापरिच्छिन्नाप्रमेयसच्चिदा-नन्दस्वरूपं अनन्तकल्याणगुणाकरं सर्वव्यापिनं चेतनाचेतनशरीरिणं सुसूक्ष्मं रथन्तरे वाग्रूपं, बृहति मनः प्राणरूपं, राजने परमात्मस्वरूपं भगवन्तं नारायणं ध्यायेत् । वामदेव्ये सहस्रशिरसं प्रजापतिं विराट्पुरुषं वा ध्यायेत् । ब्रह्मसामसु नौधस श्यैतादिषु नित्यनिरवद्यनिरतिशयकैङ्कर्य-नियोजकं मोक्षफलप्रदं श्रियःपतिं ध्यायेत् । अन्येषु सामसु श्रीमन्नारायणायेति ध्यायेत् । त्रयी विद्या हिंकारइत्याद्युद्गीथोपासन ब्राह्मणोक्तप्रकारेण ब्रह्म वा ध्यायेत् । सोमभक्षणे ओं नमो नारायणाय श्री वाग्जुषाणा सोमस्य तृप्यत्वमिति सोमं भक्षयेत् । दक्षिणां यथाविभागं दत्वा ओं नमो नारायणाय श्रीं सहस्त्रिया दक्षिणया लक्ष्म्या सहितः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यज्ञपुरुषः श्रीकृष्णः प्रीयताम् इति जलं भूमौ स्रावयेत्। अवभृथे आपो नारा इत्युक्त्वा अप्सु श्रीमन्नारायणं क्षीराब्धिशायिनं ध्यायेत्। उदवसानीयान्ते भगवान् श्री नारायणः स्वकीयैरस्मदीयदेहेन्द्रियान्तः करणैः स्वशेषभूतेन स्वनियाम्येन मया यथाशक्ति यथामति सम्पादितैः स्वशेषभूतैर्द्रव्यैस्स्वनिश्वसित भूतवेदमन्त्रैर्वासुदेवसङ्कर्षणप्रद्युम्न अनिरुद्धनारायणस्वरूपैः होत्रध्वर्युब्रह्मोद्गातृसदस्यैः केशवादि द्वादशव्यूहरूपैः अन्यैऋत्विभिः मत्स्यादिदशावताररूपैश्चमसाध्वर्युभिरनन्तावताररूपैः सदस्यैर्ब्राह्मणैश्च यथाकथञ्चिद्यथाविधि यथाशक्ति कृतेन स्वमहाराधनरूपेण तत्तन्नामयज्ञेन भगवान् प्रीयतां मे जनार्दनः 'ब्रह्मार्पणं ब्रह्म हविः' 'श्चतुर्भिश्चेतिश्लोकद्वयमुक्त्वामूलमन्त्रं द्वयञ्चोच्चरन् भूमौ जलं स्रावयेत्। ततः सहस्रकृत्वश्शतकृत्वो वा यथाशक्ति मूलमन्त्रं द्वयं च जपेत्। ततः कृष्णानुस्मरणं कुर्यात्। मध्ये प्रायश्चित्तप्राप्तौ आरंभे होमजपेज्यासु च तदन्ते च मूलमन्त्र द्वयं जपित्वा

"यथाविष्णुमयं सत्यं यथाविष्णुमयं हविः।
यथाविष्णुमयं सर्वं पाप्मा मे नश्यतां तथा"॥

इति श्लोकमुक्त्वा कृष्णानुस्मरणं कुर्यात्।

महाग्निचयने काठकाग्निचयने च प्रतीष्टकं 'तया देवतया अङ्गिरस्वद्ध्रुवा सीदे'त्युक्त्वा मूलमन्त्रं जपेत्। एवमेकाह अहीन सत्र अयनेषु काम्यकर्मस्वपि। एवंकृते तत्तत्कर्मानुगुणः फलानुभवो नास्तीति वेदव्यासभाष्यकारवेदान्ताचार्यैः प्रतिपादितम्। एवमौपासन वैश्वदेवादिषु गर्भाधान पुंसवनादिषु संस्कारेषु तत्तदारम्भे तत्तत्प्रधानहोमे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तत्तदवसाने च मूलमन्त्रजपं कुर्वन् तानि तानि कुर्यात् । एवं तुलापुरुषादीनि महादानानि प्राजापत्यादीनि कृच्छ्राणि पुनरन्यान्यपि व्रतानि कुर्यात् । सर्वत्र भाष्यकारोक्त चरमश्लोकार्थोऽनुसन्धेयः ।

अथाग्निपुरुष ध्यानम् । 'जुष्टोदमूना । अग्नेनय । चत्वारि शृङ्गा । सप्तते अग्ने' । इतिचतसृभिर्ऋग्भिरग्निपुरुषं ध्यात्वा

"चतुर्वेदीचतुःशृङ्गं सवनत्रयपादकम् ।
स्वाहाकारवषट्कार शीर्षद्वय समन्वितम् ॥

सप्तहोतृक हस्ताड्यं ऋग्यजुस्सामबन्धितम् ।
वर्षणं सर्वकामानां महान्तं देवमच्युतम् ॥

आगच्छन्तं दिशाभ्योऽग्निं जातवेदस्सहोजसौ ।
अजिराप्रभुनामानं अथवैश्वानराह्वयम् ॥

नर्योपसं पङ्क्तिराधो विसर्प्याह्वयमुज्वलम् ।
एवं विधाष्टपुरुषं अग्निं ध्यायामि संस्तरे ॥

ओं नमो नारायणाय ओं अग्निपुरुषाय नमः इति मन्त्रेण अवाहनासनार्घ्यपाद्याचमनगन्धपुष्पधूपदीपदीकं मनसा कृत्वा अग्निमध्ये यज्ञपुरुषं ध्यायेत् । 'सहस्रशीर्षा पुरुष' इत्यनेन मन्त्रेण सहस्रशीर्ष सहस्राक्ष, सहस्रपाद सहस्रकरं साहस्रं प्रजापतिं हिरण्यगर्भं श्रीगर्भं प्रातरग्निहोत्रं आदित्यमण्डलमध्यवर्तिनं हिरण्मयसर्वाङ्गं हिरण्यं श्रीं हिरण्यकेशं पुण्डरीकाक्षं ऋग्जुस्सामगीतं त्रयीरूपं उन्नामकं स्वर्गादिसत्य-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लोकान्त भोग्य भोगोपकरण भोगस्थान नियन्तारं परंज्योतिः परमात्मानमपहतपाप्मत्वादिगुणाष्टकविशिष्टं नारायणं पञ्चोपनिषन्मन्त्रैर्मूलमन्त्रेण चोच्चार्य आराधनप्रकरणे वक्ष्यमाणप्रकारेण हृदयाद्धस्तेन निर्गमय्य-हस्तेनाग्निमध्ये प्रवेशं ध्यात्वा पञ्चोपनिषन्मन्त्रैर्मूलमन्त्रेण च प्रतिष्ठाप्य आवाहनासनार्घ्य पाद्याचामनीयगन्धपुष्पधूपदीपं मधुपर्कादिकं मूलमन्त्रेण मनसा कृत्वा होमं नैवेद्यत्वेन कल्पयेत्। सायमग्निहोत्रे तु स्वाक्षिबिम्बकं हिरण्मयसर्वाङ्गं हिरण्यश्मश्रुं हिरण्यकेशं पुण्डरीकाक्षं ऋग्यजुस्सामगीतं लौकिकवैदिकवीणादिकाव्यादिशब्दवाच्यं भूम्यतलादिभोग्यभोगोपकरण भोगस्थान नियन्तारं अपहतपाप्मत्वादिगुणाष्टकविशिष्टं नारायणं पञ्चोप-निषन्मन्त्रैर्मूलमन्त्रेण च ध्यात्वा आराधनप्रकरणे वक्ष्यमाणप्रकारेण हृदयाद्धस्ते निर्गमय्य हस्तेनाग्निमध्ये प्रवेशं ध्यात्वा आवहनादि प्रातःकालवत् कुर्यात्। अनन्तापरिच्छिन्नानन्दस्वरूपं प्राणब्रह्म मनसि ध्यायन् स्वयमग्निहोत्रं जुहुयात्। आहवनीये प्राणाकाशस्वर्गाभिन्नवैद्युतपुरुषं ध्यायन् जुहुयात्। [गार्हपत्ये पृथिव्यग्न्यन्नाभिन्नादित्यान्तर्वर्तिं हिरण्मयपुरुषं ध्यायन् जुहुयात् दक्षिणाग्नौ अब्दिङ्नक्षत्राभिन्नेन्द्रपुरुषं ध्यायन् जुहुयात्।]

सोमे उत्तरवेद्यां यज्ञवराहं मोक्षधर्मोक्त महापुरुषं वा ध्यायेत्।

"सहस्रशीर्षं पुरुषं व्यक्ताव्यक्तं सनातनम्"।
सहस्राक्षं सहस्राख्यं सहस्रचरणं विभुम्॥

सहस्रबाहुं साहस्रं देवं नाम सहस्रिणम्।
सहस्रमकुटोपेतं विश्वरूपं महाद्युतिम्॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अधृष्यं सर्वभूतानां वाङ्मयं ब्रह्मसंज्ञितम् ।
शतयोजनविस्तारं उच्छ्रितं द्विगुणं ततः ॥

नीलजीमूतसंकाशं मेघस्तनितनिःस्वनम् ।
गिरिसंहननं भीमं श्वेतदीप्तोग्रदंष्ट्रिणम् ॥

विद्युदग्निप्रकाशाक्षं आदित्य समतेजसम् ।
पीनवृत्तायतस्कन्धं दृप्तशार्दूलविक्रमम् ॥

पीनोन्नतकटीदेशं सर्वलक्षणलक्षितम् ।
वेदपादं यूपदंष्ट्रम् यज्ञदत्तश्चितीमुखम् ॥

अग्निजिह्वं तथादर्भ रोमाणं ब्रह्मशीर्षकम् ।
अहोरात्रेक्षणधरं वेदाङ्गश्रुतिभूषणम् ॥

आज्यनासं स्रुचातुण्डं सामघोषस्वनं प्रभुम् ।
सत्य धर्ममयं देवं क्रमविक्रमसत्कृतम् ॥

प्रायश्चित्तमहाघोणं पशुजानुं महाकृतिं ।
उद्गातृहोमलिङ्गं तं बीजैर्विधिमहाबलम् ॥

धर्मासृजं वायुचित्तं मन्त्रस्थं सोमशोणितम् ।
वेदस्कन्धं हविर्गन्धं हव्यकव्यादि वेगिनम् ॥

प्राग्वंशकायं तेजिष्ठं नानादीक्षाभिराजितम् ।
दक्षिणाहृदयं देवं महासत्रमयं विभुम् ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपाकर्मौष्ठरुचकं प्रवर्ग्यावर्तभूषणम् ।
नानाच्छन्दो गतिपथं गुह्योपनिषदाननम् ॥

छायापत्नी सहायं वै मणिशृङ्गमिवोच्छ्रितम् ।
महायज्ञवराहं तं स्मरामि पुरुषोत्तमम् ॥

इति यज्ञवराह ध्यानम् ॥

---

॥ अथ महापुरुष ध्यानम् ॥

सहस्रशीर्षं पुरुषं सहस्रनयनं विभुम् ।
सहस्रोदरबाहुं तं सहस्रचरणं विभुम् ॥

शुद्धचन्द्रप्रतीकाशं कोटिसूर्यसमप्रभम् ।
क्वचित्कृशानुवर्णाभं क्वचिद्धिष्ण्याकृतिप्रभम ॥

शुकपत्रनिभं देवं क्वचित्स्फटिकसन्निभम ।
नीलांजनचयप्रख्यं जातरूपनिभं क्वचित् ॥

प्रवालाङ्कुरवर्णं च श्वेतवर्णं क्वचित्प्रभुम ।
क्वचित्सुवर्णवर्णाभं वैडूर्यमिवद्दकच्छविम् ॥

नीलवैडूर्यसद्दशं इन्द्रनीलनिभं क्वचित् ।
मयूरग्रीव वर्णाभं मुक्ताहारनिभं क्वचित् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तांस्तान्वर्णान्बहुविधान् रूपेबिभ्राणमव्ययम् ॥

ओंकारमुद्गिरन्तं च सावित्रीं च तदन्वयाम् ।
आरण्यकं चतुर्वेद गतं गायन्तमीश्वरम ॥

वेदिं कमण्डलुं दर्भान् मणिरूपांस्तथास्रु चः ।
अजिनंदण्डकाष्ठं च ज्वलितञ्च हुताशनम् ॥

यज्ञायुधानिचान्यानि बिभ्राणं सोमरूपिणम ।
विष्णुं यज्ञं यज्ञपतिं पुरुषं लोकजीवनम् ॥

स्तूयमानमथो रुद्रैः दक्षिणं पक्षमाश्रितैः ।
तथादित्यैर्द्वादशभिः वामं पक्षं समाश्रितैः ॥

अष्टभिर्वसुभिश्चैव स्तूयमानमथाग्रतः ।
तथा नासत्य दस्राभ्यां भिषग्भ्यां पृष्ठतस्तुतम् ।
सप्तर्षिभिस्तूयमानं प्रजापतिभिरग्रतः ।
वेद यज्ञ पशुसत्याच सरस्वत्याश्रीलक्ष्मी-

कीर्तिभूमिभिः ।

परितस्संवृतन्देवं नारदेन ध्रुवेण च
अम्भोधरैस्समुद्रैश्च मूर्तिमद्भिः समन्ततः ।
सरिद्भिश्च सरोभिश्च स्तूयमानं महाप्रभुम् ।
चतुर्भिर्मूर्तिमद्भिश्च त्रिभिर्मूर्तिविवर्जितैः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्तूयमानं पितृगणैः देवं नारायणं प्रभुम् ।
महान्तं यज्ञपुरुषं चिन्तयाम्यत्रकेशवम् ॥

इति महापुरुष ध्यानम् ।

अथवा

श्वेतद्वोपाध्वरे स्थाने स्वयं भासावभासिते ।
तेज इत्यभिविख्याते शुद्धसत्वमये शुभे ॥

वेदिमष्टतलोत्सेधां अधितिष्ठन्तमोश्वरम् ।
एकपादस्थितं देवं ऊर्ध्वबाहुमुदङ्मुखम् ॥

साङ्गान्वेदानुच्चरन्तं तपःपरममास्थितम् ।
प्रियभक्तं परमात्मानं भगवन्तं द्विजप्रियम् ॥

अर्च्यमानं सुरगणैः सदाभागवतप्रियम् ।
सृष्टिस्थित्यन्तकर्तारं बान्धवं भक्तवत्सलम् ॥

कर्तारं कारणं चैव कार्यं चातिबलद्युतिम् ।
ब्रह्मरुद्रादिदेवैः दैत्यदानवराक्षसैः ।
नागैर्यक्षैश्चगन्धर्वैः सिद्धैर्राजर्षिभिस्तथा ॥

ब्रह्मर्षिभिः हव्यकव्यैः सततं विधिपूर्वकम् ।
इज्यमानं देवदेवं पूज्यमानं पदाब्जयोः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

परमैकान्तिभिर्दत्तं हव्यं कव्यं विधानतः ।
शिरसाप्रतिगृह्णन्तं आदरातिशयात्स्वयम् ॥
चिन्तयामि श्रियोपेतं सदा नारायणं विभुम् ॥

अत्र यद्यपि परमैकान्तिभि[र्दत्तं हव्यं कव्यञ्च निरतिशयप्रीत्या भगवाञ्शिरसा प्रतिगृह्णाति । तथापि तैः परमैकान्तिभिः भगवत्पादार] विन्दयोरेव सर्वं समर्पणीयमिति निष्कर्षः । एवमुक्तप्रकारेणाग्निहोत्रं कृत्वौ-पासनेऽपि 'ओं नमो नारायणाय सूर्याय स्वाहा । सायं 'अग्नये स्वाहा' । 'ओन्नमो नारायणायाग्नये स्विष्टकृते स्वाहा' । प्रजापतये स्वाहेति वा हुत्वा वनस्पतिहोमादिकं शकलहोमं च कुर्यात् ।

उत्सृष्टाग्निराहिताग्निः विधुर आहिताग्निः सन्यासीवानप्रस्थौ चाग्नि-होत्रमन्त्रान् औपासनमन्त्रांश्च सन्ध्योपासनानन्तरं सायंप्रातर्नित्यं त्रयोदश्यादि-प्रदोषकालेऽपि जपेयुः । तदुक्तं बोधायन धर्मप्रश्ने – सन्यासिधर्मप्रकरणे षोडशे खण्डे. "सायंप्रातरग्निहोत्रमन्त्रान् जपेत् वारुणीभिस्सायं सन्ध्यामुपस्थाय मैत्रीभिः प्रातः 'अनग्निरनिकेतस्यादशरणो मुनिः । भैक्षार्थीग्राममन्विच्छेत्स्वाध्याये वाचमुत्सृजे'दिति । तस्मिन्नेवैकादशे खण्डे प्राणाग्निहोत्रमन्त्रांस्तु निरूढे भोजने जपेत् । त्रेताग्निहोत्रमन्त्रांस्तु द्रव्यालाभे यथाजपेदिति । अत्राग्निहोत्रशब्दो दर्शपूर्णमासादीनामुपलक्षकः । तेषामपि यावज्जोवाधिकारश्रुतेः । वैश्वदेव वलिहरणादि प्राणाग्निहोतृकरणाशक्तौ वैश्वदेवादिमन्त्रजपवन्नित्यं सायं प्रातः दर्शपूर्णमास्योः पश्वाग्रयण चातुर्मास्य-कालेषु अग्निहोत्रदर्शपूर्णमासपशुबन्धाग्रयणचातुर्मास्यमन्त्राणां आध्वर्यवहौत्र,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

याजमानानुक्रमणिकाग्रन्थप्रकारेण पूर्वमाहिताग्नीनामुत्सृष्टाग्नि विधुर सन्यासि-वानप्रस्थानां जपः कार्य एव । यद्वा 'उभा वामिन्द्राग्नी'त्यनुवाकं विना 'इषे त्वोर्जेत्वे'तिप्रश्नस्य, 'सत्यं प्रपद्ये' इति प्रश्नस्य 'सन्त्वासिञ्चामी'ति प्रश्ने 'यथावै समृतसोमा' इत्यनुवाकपर्यन्तं अच्छिद्रे 'याः पुरस्ताद्देवादेवेषु परिस्तृणीते'-त्यनुवाकत्रयस्य चाध्ययनक्रमेण दर्शपूर्णमासाग्रयण चातुर्मास्यार्थं जपः कार्यः। आग्रयणे 'सप्रत्नवन्नवीयसे'त्यनुवाकोक्ता ऋचो याज्यानुवाक्यार्थं जपितव्याः । पशुग्रन्थे 'अत्यन्नानगा'मित्यारभ्य' समुद्रं गच्छस्वाहे त्यनुवाकान्तस्य 'प्रजापते र्जायमाना' इत्यनुवाकस्य च 'अञ्जन्ति त्वा मध्वरे देवयन्त' इति प्रश्नस्य च जप इति विशेषः । चातुर्मास्येषु 'प्रदेवं देव्या' इति 'अग्नेयं यज्ञमध्वरं' इति 'इन्द्राग्नीरोचना दिव' इति 'अग्निर्वृत्राणि जङ्घन'दिति चतुर्णामनुवाकाना-'मदितिर्न उरुष्यतु' 'महीमूषु मातरं' 'इदं विष्णुः प्रतद्विष्णुः' 'इन्द्रं वयं शुनासीरं' 'इन्द्रायशुनासीराय' 'आवायो प्रयाभि' 'रुदुत्यं चित्र'मित्येतासां दशानामृचां जप इति विशेषः । अन्यत्सर्वं दर्शपूर्णमासमन्त्रजपवत् ।

प्रतिवसन्तं सोमयाजिनः सोमार्थं 'आप उन्दन्तु' 'देवस्य त्वा' 'आददे ग्रावा सी'ति त्रयाणां प्रश्नानां अन्त्यानुवाकवर्जितानां 'प्रजापतिरकामयत, एष ते गायत्र, योवा अयथा देवतं, निग्राभ्यास्थ, यो वै देवान्, जुष्टोवाचः, यो वै पवमानानां, त्रीणिवाव, परिभूः, स्फ्यःस्वस्तिः, भक्षेहि, महीनां, देवसवितः, श्येनाय, 'उपयामगृहीतोसि-वाक्षसत्, अग्ने तेजस्विन्, वायुर्हिङ्कर्ता, वसवस्त्वा, आयुर्दाअग्ने, सूर्यो मा, सन्त्वा नह्यामि, उपयामगृहीतोसि प्रजापतयेत्वेति द्वाविंशत्यनुवाकानां चित्तिः, पृथिवीहोता, अग्निर्होता सूर्यन्ते चक्षु-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

महाहविर्होता वाग्घोते'ति षण्णामनुवाकानां 'ब्रह्मसन्धत्तमित्यनुवाकस्य 'सक्षेदं पश्ये'त्यादितः प्रश्नान्तस्य च दर्शपूर्णमासपशुबन्धोक्तमन्त्रैः सह जपः कार्यः।

ऋग्वेदसमवेदावधीतौचेत् आज्यादिशस्त्रगत 'प्रवोदे-वायेत्यादि सूक्तानां 'उपास्म' इत्यादि गायत्रामहीयवादिसाम्नां जपःकार्यः। अनधीतवेदत्रयश्चे त् वसन्तकाले भूर्भुवस्वरिति व्याहृतीनां पञ्च-सहस्रजपं कुर्यात्। "चित्तिः, पृथिवीहोता, अग्निर्होता, सूर्यं ते चक्षु, महाहविर्होता, वाग्घोतेति, चतुर्होतॄन्वेति सहस्रकृत्वः शतकृत्वो वा जपेत्। महाहविर्होतेति सप्तहोतारं वा सहस्रकृत्वो जपेत्। अथवा वसन्तकाले एकस्मिन् शुक्लपक्षे पञ्चाहं नियमयुक्तस्सन् एकविंशति-सहस्रकृत्वः प्रणवं जपेत्। भगवता बोधायनाचार्येण अनाहिताग्नीना मशक्तानां योगिनामौपासनाभावग्निहोत्रस्य प्रत्याम्नायत्वेन 'चित्ति स्स्रु गि'ति दशहोतृहोमस्य दर्शपूर्णमासयोः पृथिवीहोते'ति चतुर्होतृ-होमस्य तत्तत्कालेषु विधानात् तज्जपः संन्यासिनां कार्यःइत्यस्माभिरुक्तः। व्याहृतीनां वेदत्रयात्मकत्वात् विधुरवानप्रस्थानां जपः। संन्यासिनां तु प्रणवजप इति विवेकः॥

चातुर्मास्यानां यावज्जीवकरणपक्षमाश्रित्य कृतसङ्कल्पानां तत्काले तन्मन्त्रजपः। सकृत्प्रयोगपक्षे तु तन्मन्त्रणपो न कार्य इति सर्वं समञ्जसम्। अयमेव जपयज्ञ इत्युच्यते। ननु अर्थासमर्थ-विद्वद्गृहस्थस्य जपयज्ञः। तस्य अधिकारित्वेन एतेषां साक्षादकरणे प्रत्यवायवचनशतदर्शनात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूर्वाश्रमे प्रतिवसन्त सोमयाजिनां यतीनां वसन्तकाले सोमयागमन्त्राणामपि जपो नित्यः। एवं विधुरवानप्रस्थयोरपि आत्मनि समारोपिताग्नीनां पूर्वमाहिताग्निसन्यासीनां मृतौ वैखानससूत्रे बोधायनसूत्रे च त्रेताग्निभिर्ब्रह्ममेधयुक्त पितृमेधविधिना दहनसंस्कारस्योक्तत्वात् तेषां आमरणं अग्निहोत्रादि मन्त्रजपयज्ञो नित्यः। न च आपस्तम्बादिभिर्यतीनां दहनसंस्कारस्यानुक्तत्वात् कथं तत्करणमिति वाच्यम्। खननसंस्कारस्याप्यनुक्तत्वात्तस्याप्यकरणं स्यात्। किञ्च आपस्तम्बादिभि'र्नैतमन्येन त्रेताग्निभ्यो दहेत्' इति विज्ञायत इति त्रेताग्निं विना कृतसंस्कारस्य प्रतिषिद्धत्वात्। नचायं आहिताग्नि गृहस्थ विषय इति वाच्यम्। वैखानस बोधायन सूत्रयोरपि पितृमेधं प्रश्ने "न तमन्येन त्रेताग्निभ्यो दहे"दिति श्रुति मापस्तम्बादिवदुदाहृत्य यतिसंस्कारप्रकरणे यतीनामनाहिताग्नीनां खनन संस्कारः। आहिताग्नियतीनां तु त्रेताग्निसंस्कार एव इति व्यवस्थापनात् न गृहस्थ विषयः। तस्मादाहिताग्नियति विधुर अपत्नीकवानप्रस्थानां अग्निहोत्रादिमन्त्रजपयज्ञो नित्यः। यतीनां दहनसंस्कारप्रयोगः अस्मदाचार्य कृते वैष्णववैशेषिकपितृमेधप्रयोगदीपे द्रष्टव्यः। अथवा 'प्रजापतिः प्रजास्सृष्ट्वा व्यस्रंसत" 'प्रजापतिः पुरुषमसृजत,' इति यजुर्वेदे अनुवाकद्वयेन सामब्राह्मणे प्रजापति वै सहस्र संवत्सरं सत्र मसृजतेति खण्डेन च दर्शपूर्णमसाग्रयणकाम्येष्टिचातुर्मास्यपशुबन्धाग्निष्टोमादि एकाहद्वादशाहाद्यहीन सत्र गवामयनादि विश्वसृजामयनपर्यन्तसंवत्सरसत्राणां अग्निहोत्रान्तर्भावोक्त्या नित्यं सायं प्रातरग्निहोत्रमन्त्रजपेनैव तत्तन्मन्त्रजपः कृतइत्याहिताग्नि यति, विधुरापत्नीक, वानप्रस्थैस्सायं प्रातरग्निहोत्र मन्त्राणामेवजपो नियमेन अवश्यं कार्यः। न तु तत्तत्कालेषु दर्शपूर्णमासादि मन्त्रजपः कार्यः। अमुमेवार्थं मनसि निधाय

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बोधायनेन सायंप्रातरग्निहोत्रमन्त्रान् जपेदित्युक्तम्। तदेतावदेव प्रणम्य भगवत्सन्निधिभूमिं गत्वा भगवते यत्किञ्चिदुपहारं दत्वा भगवन्तं श्रुतिसुखैः स्तोत्रैः स्तुत्वा पूर्वकालोक्तवर्त्मना यथाविधि पत्रपुष्पफलैः धूपदीपगन्धादिभिः जपध्यानार्चनस्तोत्रैर्भगवन्तमर्चयेत्। केवलं पुष्पाञ्जलिं वा दद्यात्। ततो भगवन्तं पुनः प्रणम्य पितरावभिवाद्य वृद्धाभिवादन, गुरूपासन, तद्धिताचरणानि कृत्वा परस्य गवे गोमतीविद्यया ग्रासमुष्टिन्दत्वा

" सोमसूर्यान्तरस्थं च गवाश्वत्थाग्निमध्यगम्।
भावयेद्भगवद्विष्णुं गुरुविप्रशरीरगम् "॥

इत्युक्तप्रकारेण गवादिष्वन्तस्थितं भगवन्तं भावयित्वा वेदाभ्यास जपाध्ययनधारण, तदर्थविचारण, धर्मादिशास्त्र, वैदिकनिगम वेदाङ्गावेक्षण प्रभृतीनि प्रथमकालकर्तव्यानि कर्माणि कृत्वा अभ्यञ्जनालेपनवासस्स्रग्भूषणादिभिरलंकृतस्ताम्बूलेन मुखशोधनं कृत्वा मङ्गलद्रव्यवीक्षणं कृत्वा अन्यान्यपि मङ्गलकर्माण्येव कृत्वा ओं कृतश्च करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्य भगवद्वासुदेवपादारविन्दार्चनेनाभिगमनेन कर्मणा भगवान् प्रीयतां वासुदेव इत्यभिगमनं भगवते समर्पयेत्।

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्य शतक्रतु चतुर्वेदि श्रीनिवासाचार्यविरचिते
पञ्चकालक्रियादीपे अभिगमननिरूपणाख्यः
प्रथमः परिच्छेदः

**


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# अथोपादानम्

अथोपादानं व्याख्यास्यामः। अन्ह्वो द्वितीयभागे संप्राप्ते ओं कृतञ्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूति चातुरात्म्य भगवद्वासुदेवपादारविन्दार्चनेनोपादानेन कर्मणा भगवन्तमर्चयिष्यामी-त्युपादानं सङ्कल्प्य, ओं भगवतो बलेन भगवतोर्वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतः कर्म करिष्यामि वासुदेवस्य इत्यनुसन्धाय कुशादि-दर्भान् समिधः पत्राणि पुष्पाणि फलमूलान्योषधीः दधिक्षीराज्यादीनि हविर्योग्यतण्डुलानि गुडानि स्नानीयद्रव्याणि वस्त्राणि स्वादुसलिलान्यन्यानि पूजोपकरणद्रव्याणि यथाशक्ति यथावस्तु याच्नया पूर्वसंपादितैर्वैर्वा संपादयेत्। यथाशुचिर्भूत्वा पूर्वोत्तराभिमुखो हुंफडिति मन्त्रेण कुशादि दर्भान्स्पृष्ट्वा

"विरिञ्चेन सहोत्पन्न परमेष्ठीनिसर्गज।
नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव॥

इति मन्त्रेण देवार्थान्दर्भान् प्राङ्मुख उपवीती पित्रर्थान्दर्भान्दक्षिणामुखः प्राचीनावीत्याहृत्य पृथक्पृथगेव निक्षिपेत्। एवमहन्यहन्याहृता दर्भाः प्रशस्ता भवन्ति। अशक्त्या यद्येकदैव दर्भग्रहणं कार्यं तर्हि माघे नभोमास्यमावास्यायां दर्भानाहरेत्। तदाऽऽनीता दर्भा वत्सरान्तकर्मसु नियोज्या भवन्ति। कुश विश्वामित्र काशानां अलाभे अश्वबाल, यव, व्रीहि, श्यामाक, नीवार, बल्वज, पुण्डरीक, दूर्वादिषु ये लब्धाः तैः कर्म कुर्यात्। ततोऽस्त्रमन्त्रेण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

समिध आहरेत्। ततः स्वयमेव स्वकृतिसिद्धानि स्वारामजानि पुष्पाणि पात्रेणाहरेत्। एतच्च पुष्पाहरणं मध्याह्नस्नानात्पूर्वमेव कार्यम्। ततस्तुलसीमाहरेत्। तन्मन्त्राः।

"तुलस्यमृतसंभूते सर्वदा केशवप्रिये।
केशवार्थं लुनामित्वां वरदाभवशोभने॥

मोक्षैकहेतो धरणिप्रसूते विष्णोःसमस्तस्य गुरोः प्रिये ते।
आराधनार्थं पुरुषोत्तमस्य लुनामिपत्रं तुलसि क्षमस्व॥

प्रसीद मम देवेशि प्रसिद हरिवल्लभे।
क्षीरोदमथनोद्भूते तुलसित्वं प्रसिद मे॥ इति

मन्त्रैः स्वारामजानि तुलसीपत्राणि पात्रे स्वयमेवाहरेत्। अन्यान्यपि पत्राङ्कुरमूलफलादीन्यस्त्रमन्त्रेणाहरेत्। पुष्पाङ्कुरफलपत्रमूल धूप वस्त्राभरणेषु शास्त्रेण वर्ज्यावर्ज्य प्रशस्त विभागपुरस्सरंमाहरेत्। करवीरो पद्मो केतकी जाति मल्लिकोत्पल चम्पक कुटज वकुल तुलसीतमाल नवमालिका मरुवक पलाश पुन्नाग श्वेतकुमुद वनमालिका, कर्णिकाराण्यशोकद्वय नन्द्यावर्तद्वय पुष्पाणि ग्राह्याणि। अर्कपुष्पेण विष्णुन्नार्चयेत्। करवीरपुष्पैर्गृहार्चान्न पूजयेत्। विहितेष्वपि छिद्रं मुकुलं जीर्णं भग्नपत्रं स्वयं पतितं जन्तुदूषितमूर्णनाभेनवासितं निर्गन्धपारक्यं देवालयोद्भूतमशुभदेशोत्थं उग्रगन्धं चतुष्पथशिवालय श्मशानावनिमध्यजं अशनिपातक्षतमकर्मण्यं केशापविद्धं पादलङ्घितं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

म्लानं पर्युषितं भुक्तशेषं आघ्रातमस्पृश्यैः स्पृष्टहस्तीनीतं पटानीतं अर्कपत्रस्थितं पराहृतं क्रयक्रीतं अवैष्णवशूद्राहृतं च पुष्पं भगवदर्चने वर्जयेत्। स्वयं परतो वाऽन्यागमसंभूतानां पुष्पफलादीनां ग्रहणे तस्करत्वं स्यात्। भगवदर्चने तुलसीपुष्पं मुख्यम्। तदलाभे तु पत्रम्। तदलाभे तच्छाखा। तदलाभे तन्मृत्तिकेति बोध्यम्। सर्वेषामपि पुष्पाणामुत्पलं सहस्रगुणं तस्मात्पद्मं तस्माच्छतपत्रं तस्मात्सहस्रपत्रं तस्मात्पुण्डरीकं तस्मात्तुलसी ततो बकपुष्पं ततस्सौवर्णं ततोऽधिकं नासीदितिज्ञेयम्। परिव्राजकैः पुष्पादिकं स्वयन्नकर्तव्यम्। अन्याहृतैः पुष्पादिभिः अद्भिरेव वा पूजाकार्या। भगवदाराधनोपकरण सम्पादनार्थ-द्रव्यार्जनविधिः धर्मशास्त्रे द्रष्टव्यः। देवदारुकृतं चन्दनागरुमिश्रितं सर्जरसं प्राण्यङ्गवर्जितं गव्येन सर्पिषा कृतं धूपं प्रशस्तं भवति। एवं पूजोपकरणानि सम्पाद्य यागगृहे निदध्यात्। दीपिकास्तंभानर्घ्यादि पञ्चपात्राण्यर्घ्यादिप्रतिग्रहपात्राणि उद्धरणीं स्नानवेदिकां नैवेद्यपात्राणि पानीयपात्रं भगवत्पादुके कङ्कतिकामञ्जनक्षेत्रपात्रं अञ्जनशलाकादर्पणं सहस्ररन्ध्रयुक्तस्नानार्थपात्रं धूपपात्रं दीपपात्रं घण्टां नीराजनपात्रं बलिपात्रं मुक्तातपत्रमन्यान्यातपत्राणि व्यजनानि तालवृन्तानि चामराणि पूजाद्रव्याणि निक्षेपपात्रं स्नानासनालङ्कारासनयात्रासनभोजनासनपर्यङ्कासनानि रथगजतुरगान्दोलिकादि वाहनानि ध्वजान् नानाविधानि वीणादिवाद्यानि जलभाजनं भगवद्योग्यानि वस्त्राणि उपवीतं कस्तूरिकामृगमदकुङ्कुमादिगन्ध द्रव्याणि कर्पूरपूगनागवल्ल्यादीनि रजन्यामलक तैलादिद्रव्याणि स्नानार्थानि नानाविधानिभूषणानि शालितण्डुलादिमालाद्रव्याणि नीराजन द्रव्याणि

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

लीलायष्टिं शङ्खचक्राद्यायुधानि भगवन्निवेदनयोग्यानि पदार्थान्यन्यानि चाभीप्सितानि यथार्हमुपादद्यात् । संपादितसमाराधनोपकरणश्चेत् सच्छास्त्र-परिशीलनेन वा मूलमन्त्रानुसन्धानेन वा कालक्षेपं कुर्यात् । ओं कृतञ्च-करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूति चातुरात्म्य भगवद्वासुदेव पादारविन्दार्चनेन कर्मणा भगवान्प्रीयतां वासुदेव इत्युपादानं भगवते समर्पयेत् ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्य शतक्रतुचतुर्वेदि नावल्पाक्कम् श्रीनिवासाचार्यकृतिषु पञ्चकालक्रियादीपे उपादाननिरूपणाख्यो द्वितीयः परिच्छेदः

**

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# अथेज्या

—

अथेदानीमहोरात्रकृत्येषु प्रधानभूतामिज्यां व्याख्यास्यामः । अन्हस्तृतीयांशे मध्याह्नसमये प्राप्ते ओं कृतञ्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूति चातुरात्म्य भगवद्वासुदेव पादारविन्दार्चनेन इज्यया भगवत्कर्मणा भगवन्तं वासुदेवमर्चयिष्यामीतीज्यां सङ्कल्प्य, ओं भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवन्तमर्चचिष्यामि वासुदेवस्य इत्यानुसन्धाय भगवानेव स्वशेषभूतेन मया स्वीयैरेव कल्याणतमैरौपचारिक सांस्पर्शिकाभ्यवहारिकैर्भोगैरखिलपरिजनपरिच्छदान्वितं स्वात्मानं प्रीतं कारयितुमपक्रमते इत्यनुसन्धाय स्नानार्थं तीर्थं गत्वा शुचौ देशे भूमिं प्रक्षाल्य अवतारं च शोधयित्वा स्नानं सङ्कल्प्य दूर्वां मृत्तिकां गोमयञ्च निधाय पाणिपादौ च प्रक्षाल्याचम्य अम्भांसि ताम्रादिपात्रेषूद्धृत्य जलाद्बहिस्तीरे स्थित्वा आर्द्रामलकमात्रया मृदा तोयेन च स्वकं देहं संशोधयेत् । अयमनुष्ठानक्रमः । षड्भिः पादौ, चतसृभिर्जङ्घे, तिसृभिर्नाभिकटी एकया शिर आलिप्य प्रक्षाल्य 'सहस्रपरमे'ति दूर्वास्नानं कृत्वा 'अश्वक्रान्त' इति मृत्तिका समीपं गत्वा 'उद्धृतासी'ति मृदमुद्धृत्य "मृत्तिकेहनमे पाप"मिति गात्रेषु मृत्तिकामालिप्य प्रक्षाल्याचम्य मूलमन्त्रेण मृदमादाय द्विधाकृत्य शोधिततीरे एकं भागं निधायान्येनाधिकेन भागेन देहप्रक्षाळनं कृत्वा निमज्ज्याचम्य प्राणायामत्रयमासीनो भगवन्तं ध्यायन् कृत्वान्यंमृद्भागं आदाय वामपाणितले त्रिधाकृत्य मूलमन्त्रेण पृथक्पृथक्संप्रोक्ष्याभिमन्त्र्य एकेन दिग्बन्धनमस्त्रमन्त्रेण कुर्यात् । अन्येन तीर्थस्य पीठं ओन्नमो भगवद्विष्णुतीर्थायेति जलमध्ये निधायान्यं मृद्भाग-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मादायादित्यमण्डलान्तर्वर्तिपुरुषतेजसा शिरस उपरि द्वादशाङ्गुल्यन्तस्थित-
शतदलपद्मस्थं भगवत्तेजसा वा सन्तर्प्य केशवद्यूर्ध्वपुण्ड्रधारणं कृत्वा शिष्टेन
गात्रानुलेपनं कुर्यात् । ततः "समस्तजगदाधार शङ्खचक्रगदाधरे" त्यादि
'हिरण्यवर्णा' इति मार्जनान्तं प्रातःस्नानवत्कृत्वा पवमानस्सुवर्जन इत्यनुवाकेन
मार्जयित्वा इदमाप इति ऋग्यजुर्भ्यां मार्जयित्वा अञ्जलावप आदाय द्रुपदा-
मन्त्रस्त्रिः पठित्वा मूर्ध्नि विन्यस्य अन्तर्जले निमग्नो द्रुपदामन्त्रं त्रिरावर्तयेत् ।
ततोऽघमर्षणसूक्तं जपंकुर्वन् निमज्ज्योन्मज्ज्य मूलमन्त्रेण भगवन्तमावाहनादि
षोडशोपचारैरभ्यर्च्य तद्विष्णोरिति मन्त्रेण विष्णुगायत्र्याच श्रीमन्ना-
रायणं स्मरन् पुनः पुनर्निमज्ज्योन्मज्ज्य जले निमग्नः प्रणवान्विता व्याहृती-
र्गायत्रीश्च त्रिरावर्त्य प्रणवं यथाशक्ति जपित्वोन्मज्य जले निमग्नः पुरुष-
सूक्त तरत्समन्दी चतु ऋचं शुद्धाशुद्धीयत्रयं आयंगौरिति तृचं 'क्या न
श्चित्त' इति तृचं पवस्व सोम मन्दयन्निति वर्गत्रयं रथान्तरबृहद्वामदेव्य
रौरवयौ धाजय महानान्नि पुरुषव्रत पञ्चक विष्णुसूक्तानि जपित्वोन्मज्य,
हंसश्शुचिषदिति त्रिर्जपन् सूर्यं प्रेक्ष्य मूलमन्त्रेण जलमभिमन्त्र्योदकाञ्जलि
मादायेत्यादि प्रातस्नानवत्कृत्वा द्वि द्विराचम्य प्राणानायम्य माध्यान्हिक-
सन्ध्यावन्दनं सङ्कल्प्य 'आपोहिष्ठेति मार्जयित्वा परिषिच्यापःपुनात्वित्यपः
पीत्वाऽऽचम्य सुरभिमत्या 'आपोहिष्ठेति च मार्जयित्वा परिषिच्य
गायत्र्याऽर्घ्यं दत्वा प्रायश्चित्तार्घ्यं च दत्वा परिषिच्य मासेशतर्पणं
देवर्षिपितृतर्पणञ्च कृत्वा धृतवस्त्रोत्तरीयो धृतोर्ध्वपुण्ड्रस्तुलसीनळिनाक्ष-
मालाश्रीपवित्रधारणं कृत्वा गायत्रीजपं गायत्र्युपस्थानं असत्येनेति
नारायणोपनिषदा च आदित्योपस्थानञ्च कृत्वा यथाशक्ति मूलमन्त्रं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जपित्वा आधारशक्त्यादि तर्पणं कृत्वा आवाहिततीर्थं मन्त्रांश्चात्मनि समाहृत्य 'कनिक्रद'दिति शाकुनसूक्तं जपन् भगवत्कलशमादाय 'इमं मे गङ्गे' इति ऋचा जलमभिमन्त्र्य 'आपो अस्मानिति तृचा कलशं क्षाळयित्वा 'समुद्रज्येष्ठा' इति सूक्तेन जलं गृहीत्वा 'युवं वस्त्राणी'ति मन्त्रेण वस्त्रेणाच्छाद्य 'प्रसम्राजमि'ति सूक्तेन गृहं प्रविश्य सुप्रक्षाळितपाणिपादः स्वाचान्तो यागभूमिसमीपं गत्वा वायुमन्त्रेण तालत्रयं कुर्वन् कवाटमुद्घाट्य देवव्रतेन साम्ना दक्षिणपदविन्यासपूर्वकमन्तः प्रविशेत्। ततः शुचौ देशे मनोहरे निश्शब्दे ओं भूः भूम्यै नम इति भुवं सङ्गृह्य ओं यं वायवे नम इति वायुबीजं मूलमन्त्र शिरस्कं दक्षिणहस्ते न्यस्य शोषयामीति तां विशोष्य ओं रं अग्नये नम इति वह्निबीजं मूलमन्त्रशिरस्कं दक्षिणहस्ते न्यस्य चन्द्रमण्डलान्तर्गतश्वेतपद्मस्थितामृतेन प्लावयामीति संप्लाव्यास्त्रमन्त्रेण तालत्रयेन भगवत्प्रबोधनं कृत्वा वायुमन्त्रेण दिव्यकवाटमपनीय गुरुपरम्परया परमगुरुं भगवन्तं शरणमुपगम्य पुण्डरीकाक्षविद्यां मूलमन्त्रं द्वयञ्चानुसन्दधन्तमेव प्राप्यत्वेन प्रापकत्वेन अनिष्टनिवारकत्वेन यथावस्थित स्वरूपरूपगुणविभूतिलीलोपकरणविस्तारमनुसन्धाय 'अखिलहेय प्रत्यनीके'त्यादि अनन्यशरणस्त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये' इत्यन्तेन वाक्येन न्यासदशकेन च भगवन्तं शरणमुपगम्य तत्प्रसादोपबृंहितमनोवृत्तिस्तमेव भगवन्तं सर्वेश्वरेश्वरं आत्मनः स्वामित्वेनानुसन्धाय अत्यर्थप्रियाविरत विशदतमप्रत्यक्षरूपानुध्यानेन ध्यायन्नासीत। ततस्तदनुभवजनितातिमात्रप्रीतिकारित परिपूर्णकैङ्कर्यरूपपूजामारभेत। अथ देवस्य दक्षिणपार्श्वे स्वस्यासनमन्त्रेण निधाय तेन प्रोक्ष्य तत उपविश्य स्वस्ति-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कासनं पद्मासनं वा बद्ध्वा तुर्यघोषे प्रवर्तिते तिरस्करिण्या द्वारे निच्छिद्रादिते सति ओं कृतञ्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूति चातुरात्म्य भगवद्वासुदेव पादारविन्दार्चनेन इज्यया भगवत्कर्मणा भगवन्तमर्चयिष्यामि ओं भगवतोबलेन भगवतोवीर्येण भगवत्तस्तेजसा भगवतः कर्मणा भगवन्तमर्चयिष्यामि वासुदेवस्य इत्यनुसन्धाय स्वनियाम्य स्वरूपस्थिति प्रवृत्ति स्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयकल्याणतमद्रव्यमयान् औपचारिकसांस्पर्शिकाभ्यवहारिकादि समस्त भोगानतिप्रभूतानतिप्रियतमानतिसमग्रानत्यन्तभक्तिकृताखिलपरिजनपरिच्छदान्विताय स्वस्मैस्वप्रीतये स्वयमेव प्रतिपादयितुमुपक्रमत इत्यनुसन्धायास्त्रमन्त्रेण दिग्बन्धनं कृत्वा तेजोमन्त्रेण प्राकारवत्स्थितं वह्निं ध्यात्वा सुदर्शनमन्त्रेण चक्रमुद्रां विन्यस्य आत्मानं गुप्तंध्यात्वा प्राणायामत्रयं कुर्यात् । प्रथमेप्राणायामे नाभिदेशे भगवन्तं संस्थाप्य दक्षिणनासया वायुं तूष्णीं विसृज्य मूलमन्त्रं चतुर्दशवारं जपन् वामनासया वायुमापूर्य मूलमन्त्रमष्टाविंशतिवारं जपन् कुम्भकं कृत्वा मूलमन्त्रं सप्तवारं जपन् दक्षिणनासया वायुं रेचयेत् । रेचकसमये नाभिदेशस्थं भगवन्तं सषुम्नया हृदयमागमय्य जीवस्य कल्मषं गृहीत्वा वायुनासह दक्षिणनासया निर्गमय्य नित्यं द्वादशाङ्गुल्यन्तस्थितशतदलपद्मे स्थित्वा जीवस्य कल्मषं क्षिपन् तन्ध्यायेत् । द्वितीये प्राणायामे दक्षिणनासया वायुना सह भगवन्तं हृदयेस्थापयित्वा कुंभकं कृत्वा वामनासया वायुं विसृजेत् । तृतीये प्राणायामे वामनासया वायुमापूर्य कुम्भकं कृत्वा दक्षिणनासया रेचकसमये वायुना भगवन्तं निर्गमय्य शतदलपद्मे स्थापयेत् । अत्र प्राणायामत्रयेऽपि


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मूलमन्त्रस्य कुंभकेऽष्टाविंशतिवारं जपः। पूरके तदर्धं। रेचके चतुर्थांशमीत्येवं प्राणायामत्रयं कृत्वा स्वदेहे पञ्चोपनिषन्मन्त्रान् पादादिमूर्धपर्यन्तं संहारक्रमेण न्यसेत्। तत्प्रकारश्चेत्थम्। ओं लां नमः पराय सर्वात्मने नारायणाय इति पादयोः ओं वां नमः पराय निवृत्यात्मने अनिरुद्धायेति गुह्ये ओं रां नमः पराय विश्वात्मने प्रद्युम्नायेति हृदये ओं यां नमः पराय पुरुषात्मने सङ्कर्षणायेति नासाग्रे ओं षौं नमः पराय परमेष्ठ्यात्मने वासुदेवायेतिशिरसि

ततस्संहारक्रमेणतत्त्वन्यासः। ओं कं पृथिव्यै नमः ओं चं गन्धतन्मात्रात्मने नम इति पादयोः ओं खं अद्भ्यो नमः ओं जं रसतन्मात्रात्मने नम इति गुह्ये ओं गं तेजसे नमः ओं झं रूपतन्मात्रात्मने नम इति हृदये ओं घं वायवे नमः ओं झं स्पर्शतन्मात्रात्मने नम इति मुखे ओं ङं आकाशात्मने नमः ओं ञं शब्दतन्मात्रात्मने नम इति शिरसि टं पायवे नमः ठं उपस्थाय नमः डं पादाभ्यां नमः ढं पाणिभ्यां नमः णं वाचे नमः तं घ्राणाय नमः थं जिह्वायै नमः। दं चक्षुर्भ्यां नमः। धं त्वचे नमः, नं श्रोत्राभ्यां नम इति तत्तदिन्द्रियस्थानेषु हृदयस्याधोभागमारभ्योर्ध्वक्रमेण। पं मनसे नमः फं अहंकाराय नमः बं बुद्ध्यै नमः भं प्रकृत्यै नमः इति ललाटस्याधोभागमारभ्योर्ध्वक्रमेण। मं जीवाय नम इति एवं तत्त्वन्यासं कृत्वा दक्षिणेन पाणिना ओं यं इत्यष्टकृत्व उच्चरन् वायवे नम इति मूलमन्त्रशिरस्कं नाभिदेशे विन्यस्य वेद्याकारं वायुबीजं ध्यायन् मन्त्रोद्भूतचण्डवाय्वाप्यायित नाभिदेशस्थवायुना धूम्रेण सकल्मषं शरीरमन्तर्बहिश्च सर्वतत्त्वमयं तत्त्वक्रमेण शोषयामीत्यनुसंधाय दक्षिणनासया वायुं विसृजेत्।

JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
CC-0. Jangamwadi Math Collection. Digitized by eGangotri
LIBRARY
Jangamawadi Math, Varanasi

हृद्देशे रं इत्यष्टवारं जपन् अग्नये नम इति मूलमन्त्रशिरस्कं विन्यस्य त्रिकोणं रक्तवर्णं अग्निबीजं ध्यायन् मन्त्रोद्भूतचक्राग्निज्वालोपबृंहित जाठराग्निना तत्तत्समष्टिप्रलीनसर्वतत्त्वसर्वकिल्बिषसर्वाज्ञानतद्वासनासहितं शरीरं दाहयामीत्यनुसन्धाय वामनासया वायुं विसृज्य दक्षिणनासया ओं रं इति षोडशवारं जपन्वायुमापूर्य द्वात्रिंशद्वारं जपन्कुंभकंकृत्वाऽष्टवारं जपन्वामनासया वायुं रेचयेत्। कण्ठदेशे लमित्यष्टवारं जपन् महेन्द्राय नम इति मूलमन्त्रशिरस्कं माहेन्द्रं बीजं विन्यस्य पीताभश्चतुरश्रमुत्थितमग्निस्पर्शनेन सह स्तंभयामीत्यनुसन्धाय वामनासया वायुं विसृज्य दक्षिणनासया ओं लमिति षोडशवारं जपन् वायुमापूर्य द्वात्रिशद्वारं जपन् कुंभकंकृत्वाऽष्टवारं जपन्वामनासया वायुं रेचयेत्। देहे ज्वालां भगवतिलीलां ध्यात्वा संहारक्रमेण पृथिव्यादीनि तत्त्वानि संहृत्य परमात्मनिस्थितं जीवं ध्यायेत्। यथा, घ्राणोपस्थेन्द्रिययुतां पीताभां चतुरश्रां पञ्चगुणितां पृथिवीं गन्धतन्मात्रे संहरामि। रसनापाय्विन्द्रिययुता अर्धचन्द्राकृतीः श्वेताश्चतुर्गुणा अपो गन्धतन्मात्रं च रसतन्मात्रे संहरामि। चक्षुः पादेन्द्रिययुतं त्र्यंश्रं पाटलं त्रिगुणं तेजो रसतन्मात्रं च रूपतन्मात्रे संहरामि। त्वक्पाणीन्द्रिययुतं वृत्तं धूम्रं द्विगुणं वायुं रूपतन्मात्रं च स्पर्शतन्मात्रे संहरामि। श्रोत्रवागिन्द्रिययुतं नीलोत्पलदलप्रभं शब्दगुणमाकाशं स्पर्शतन्मात्रञ्च शब्दतन्मात्रे संहरामि। शब्दतन्मात्रं मनसि संहरामि। मनोऽहंकारे संहरामि। अहंकारं बुद्धितत्त्वे संहरामि। बुद्धिं प्रकृतौ संहरामि। प्रकृतिं जीवे संहरामि। जीवं साधन विवशं सुसूक्ष्मं भास्वराभं नाभिचक्रेऽवस्थितं सुषुम्नया पञ्चपत्रसुसूक्ष्मया नाडिकया कुम्भकेन वायुना देहे उपर्यारोहयामि। ततो ब्रह्मरन्ध्रं भित्वा देहाद्बहिर्निर्गतं भास्करस्य मण्डलं प्रविश्य मण्डलाद्बहिर्निर्गतं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शरीरं जीवं परस्मिन्ब्रह्मणि स्थितं ध्यात्वा पादाग्रे यं वायवे नम इति वायुबीजं विन्यस्य वायुना पादादिमूर्धपर्यन्तं देहं विशोषयामीति ध्यात्वा पादाग्रे रं पावकाय नम इति वह्निबीजं विन्यस्य वह्निज्वालया पादादिमूर्धपर्यन्तं देहं दाहयामीति ध्यात्वा भगवतो विनिस्सृतवायुना भस्मनि राजसतामसांशावपोह्य "ह्रां ह्रीं ह्रूं ह्रैं ह्रौं वं" इत्यष्टवारं जपन् अमृताय नम इति मूलमन्त्रशिरस्कं निवृत्तिकलाबीजं प्रतिष्ठाकलाबीजं शान्तिकलाबीजं शान्त्यतीतकलाबीजं अमृतकलाबीजञ्च मूर्ध्नि विन्यस्य स्फटिकाकाराणि वृत्तानीमानि बीजानि ध्यायन् भगवद्वामपादाङ्गुष्ठ नख-शीतांशुमण्डलात् गलद्दिव्यामृतधारयाऽऽत्मानमभिषेचयामीति अनुसंधाय दक्षिणनासया वायुं विसृज्य वामनासया ओं वं इति षोडशवारं जपन् वायुमापूर्य द्वात्रिंशद्वारं जपन् कुंभकं कृत्वाऽष्टवारं जपन् दक्षिणनासया वायुं रेचयेत् । ततो भगवद्वामपादाङ्गुष्ठनखशीतांशुमण्डलात् गलद्दिव्यामृत-धारया तत्सात्विकांशं भस्म प्लावयामीत्यनुसन्दधत्तद्भस्म संप्लाव्य अमृत मयतटाकं ध्यात्वा "तत्र आधारशक्त्यै नम" इत्याधारशक्तिं ध्यात्वा पद्माय नम इति तन्मध्ये हेममयं पद्मं ध्यात्वा तन्मध्ये पिण्डीभूतममृत ध्यात्वा तस्मिन् पिण्डीभूतेऽमृते भगवतिस्थितं जीवं भगवद्वामपादाङ्गुष्ठा-दादाय सात्विकांशंभस्मयितुं तं जीवं प्रवेशयामीति प्रवेश्य तस्मात्पिण्डीभूता-दमृतादुत्पन्नं जीवं ध्यायामि, जीवात्प्रकृतिमुत्पन्नां ध्यायामि, प्रकृतेर्बुद्धि-मुत्पन्नां ध्यायामि, बुद्धेरहङ्कृतिमुत्पन्नां ध्यायामि, अहङ्कृतेश्च मन उत्पन्नं ध्यायामि, मनसश्शब्दतन्मात्रामुत्पन्नां ध्यायामि, शब्दतन्मात्रायाः श्रोत्र-वागिन्द्रिययुतं शब्दगुणं आकाशमुत्पन्नं स्पर्शतन्मात्राञ्चोत्पन्नां ध्यायामि,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्पर्शतन्मात्रायाः त्वक्पाणीन्द्रिययुतं शब्दस्पर्शगुणकं वायुमुत्पन्नं रूपतन्मात्राश्चोत्पन्नां ध्यायामि, रूपतन्मात्रायाः चक्षुः पादेन्द्रिययुतं शब्दस्पर्शरूपगुणकं तेज उत्पन्नं रसतन्मात्राश्चोत्पन्नां ध्यायामि। रसतन्मात्रायाः रसनापाय्विन्द्रिययुताः शब्दस्पर्शरूपरसगुणाः अप उत्पन्ना गन्धतन्मात्राश्चोत्पन्नां ध्यायामि। गन्धतन्मात्रायाः घ्राणोपस्थेन्द्रिययुतां शब्दस्पर्शरूपरसगन्धगुणां पृथिवीमुत्पन्नां ध्यायामि। एवं सावयवे देहे स्वात्मानं प्रविष्टं ध्यायामि। शरीरविशिष्टमात्मानं भगवद्दक्षिण पादाङ्गुष्ठे प्रवेशयामीति मूलमन्त्रमुच्चरन् तत्र प्रवेश्य प्राणायामं कुर्वन् भगवत्प्रसादेन भगवत्किङ्करतायोग्यतामापाद्य तस्मादादाय तद्वामपादाङ्गुष्ठादधस्तान्मूलमन्त्रेणात्मानं विन्यस्य देववामपादाङ्गुष्ठनखशीतांशुमण्डलात् गलद्दिव्यामृतधारयात्मानमभिषेचयामीत्यभिषिच्य भगवत्प्रसादेन तदमृतमयं शरीरं सर्वकैङ्कर्यैकमनोहरं सर्वकैङ्कर्यैकयोग्यं ध्यात्वा तस्मिन् शरीरे तत्त्वदृष्टिन्यासं कुर्यात्। शिरोमध्ये पुरः प्रभृति चतुर्दिक्षु च 'क्षं सत्याय नमः' 'हं वासुदेवाय नमः' 'सं सङ्कर्षणाय नमः' 'षं प्रद्युम्नाय-नमः' शं अनिरुद्धाय नमः। हृदये ऊर्ध्वमारभ्याधः क्रमेण वं राकायै नमः लं मायायै नमः रं विद्यायै नमः यं क्रियायै नमः। ललाटोर्ध्वभागमारभ्य मं देवेभ्यो नमः मं जीवेभ्यो नमः मं जीवाय नमः भं प्रकृत्यै नमः। हृदयोर्ध्वदेश मारभ्य बं बुद्ध्यै नमः फं अहङ्काराय नमः पं मनसे नमः इति विन्यस्य नं श्रोत्राभ्यां नमः धं त्वचे नमः दं चक्षुर्भ्यां नमः थं जिह्वायै नमः तं घ्राणाभ्यां नमः णं वाचे नमः ढं पाणिभ्यां नमः डं पादाभ्यां नमः ठं उपस्थाय नमः टं पायवे नमः इति तत्तदिन्द्रियेषु। भं शब्दतन्मात्रात्मने नमः ङं आकाशाय नमः शिरसि। झं स्पर्शतन्मात्रात्मने नमः घं वायवे नमः मुखे।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जं रूपतन्मात्रात्मने नमः गं तेजसे नमः हृदये छं रसतन्मात्रात्मने नमः खं अद्भ्यो नमः गुह्ये चं गन्धतन्मात्रात्मने नमः कं पृथिव्यै नमः पादयोः । ततो भूर्ध्नादि पादपर्यन्तं पञ्चोपनिषन्मन्त्रान् सृष्टिक्रमेण विन्यसेत् । ओं षौं नमः परायपरमेष्ठ्यात्मने वासुदेवाय शिरसि ।

ओं यां नमः पराय पुरुषात्मने सङ्कर्षणाय नासाग्रे ओं रां नमः पराय विश्वात्मने प्रद्युम्नाय हृदये ओं वां नमः पराय निवृत्त्यात्मनेऽनिरुद्धाय गुह्ये ओं लां नमः पराय सर्वात्मने नारायणाय पादयोः । एवं न्यासं कुर्वन् तत्तच्छक्तिमयमुद्भूतं देवं ध्यायेत् । ततः पूर्ववच्छिरसि मूलमन्त्रशिरस्कं अमृतबीजं विन्यस्य प्राणायामेनैकेन देववामपादाङ्गुष्ठविनिसृताऽमृतधारया शरीरविशिष्टमात्मानमभिषिच्य मूलमन्त्रेण परमात्मानं हृदये प्रवेश्य प्राणप्रतिष्ठाङ्कुर्यात् । अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुस्सामाथर्वाणि छन्दांसि, सकलजगत्सृष्टिकारणी प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं प्राणप्रतिष्ठासिद्ध्यर्थे विनियोगः । ओं आं ङं घं गं खं कं आकाशानिलतेजोम्बु पृथिवी प्राणात्मने अं ज्ञानाय हृदयाय नमः । ओं ईं ञं झं जं छं चं शब्दस्पर्शरूपरसगन्धापनात्मने इं ऐश्वर्याय शिरसे । ओं ऊं णं ढं डं ठं टं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणव्यानात्मने उं शक्त्यै शिखायै वषट् ओं ऐं नं धं दं थं तं वाक्पाणिपादपायूपस्थोदानात्मने बलाय कवचायहुम् ।

ओं औं मं भं बं कं पं वचनादानगमनविसर्गानन्दसमानात्मने ओं तेजसे नेत्रद्वयाय वौषट् ॥ ओं अः क्षं ळं हं सं षं शं वं लं रं यं मनोबुद्ध्यहङ्कार चित्तज्ञानात्मने अं वीर्यायास्त्राय फट् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यानम् ।

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः
पाशान्कोदण्डमिक्षूद्भवमथगुणमप्यङ्कुशं पञ्चबाणान् ।
बिभ्राणासृक्कपालं त्रिणयनलसितापीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरीप्राणशक्तिः परा नः ॥

॥ मन्त्रः ॥

आं ह्रीं क्रों यरलवशषसहों हंसः अमुष्य प्राण इह प्राणः । आं ह्रीं क्रों यरलवशषस हों हंसः अमुष्य जीव इह स्थितः । आं क्रीं ह्रीं यरलवशषसहों हंसः अमुष्य सर्वेन्द्रियाणि मनो-बुद्धिरहङ्कारश्चित्तं पृथिव्यप्तेजोवाय्वाकाशशब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्च क्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्था इहागत्य अमुष्य शरीरे सुखं चिरं तिष्ठन्तु स्वाहा । लं हंसः सोऽहं स्वाहा । असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् । ज्योक्पश्येम सूर्यमुच्चरन्त मनुमते मृडयानस्स्वस्ति । इति प्राणप्रतिष्ठां कृत्वा पुनरपि पूर्ववच्छिरसि मूलमन्त्रशिरस्कममृतबीजं विन्यस्य प्राणायामेन शरीरविशिष्टमात्मानमभिषेचयेत् । ततः किरीटादि विन्यसेत् किरीटाय मकुटाधिपतये नमः शिरसि । श्रीवत्साय श्रीनिवसाय नमः दक्षिणोरसि । श्रीकौस्तुभाय दिव्यरत्नाय नमः उरोमध्ये । वैं वैजयन्त्यै वनमालायै नमः पार्श्वयोः । सुदर्शनाय हेतिराजाय नमः दक्षिणभुजे । पाञ्चजन्याय शङ्खाधिपतये नमः वामभुजे । कौमोदक्यै गदाधिपत्न्यै नमः ललाटे । शार्ङ्गाय चापाधिपतये नमः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

शिरासि। नन्दकाय खड्गाधिपतये नमः हृदये। इति विन्यस्य प्रणवादि-नमोन्तैः केशवादि द्वादशनामभिः द्वादशोर्ध्वपुण्ड्रान् ध्यात्वा द्वादशाक्षरेण मन्त्रेण मूर्ध्नि पुण्ड्रन्यासं ध्यात्वा पुण्ड्रमध्ये तत्तन्मूर्तिध्यानं पूर्ववत्कृत्वा मातृकान्यासं कुर्यात्।

यथा अन्तर्मातृकान्यासो बहिर्मातृकान्यासश्चेति मातृकान्यासो द्विविधः। तत्र अन्तर्मातृकान्यासं कृत्वा बहिर्मातृकान्यासं कुर्यात्। अन्तर्मातृकान्यासो यथा - मातृकायाः ब्रह्मा ऋषिः। देवी गायत्रीछन्दः। योगनिद्रा महामाया विष्णुशक्तिर्देवता। प्रणवं बीजं अकारःशक्तिः वर्णा नानाविधाः। सर्वकामसिद्ध्यर्थे विनियोगः।

पञ्चाशद्वर्णभेदैः विहित वदनदोःपादभुक्कुक्षिवक्षोदेहां
भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदातां।
अक्षस्रक्कुंभचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थां
अच्छाकल्पामत्युच्छस्तनघनभरां भारतीं तां नमामि॥

इति ध्यात्वा प्रत्यक्षरं प्रणवादिनमोन्तं चतुष्पत्रे आधारे षट्पत्रे गुह्ये दशदले नाभौ द्वादशदले हृदये षोडशदले मुखे द्विदले मूर्ध्नि चेति क्रमेण सर्वत्र प्रागादिक्रमशोन्यसेत्। बहिर्मातृकान्यासस्तु—शुद्धा सबिन्दुका सविसर्गा सबिन्दुविसर्गा तारपुटिता श्रीपुटिता मान्मथबीजपुटिता तारश्रीशक्तिमान्मथैस्समस्तैः पुटिता सशक्तिकैःन्केशवादिभिर्युता इति दशविधः। तत्र केशवादि-युतायाः मातृकाया न्यासो वैष्णवः। अन्योऽपिवासुदेवादियुतो वैष्णवो मातृकान्यासो अस्ति। सचात्रकथ्यते। यथा वैष्णव्याः मातृकायाः ब्रह्माऋषिः।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चत्वारो वेदाश्छंदांसि परमात्मा नारायणो देवता। अकारो बीजं षकारःशक्तिः शुक्लो वर्णः। क्लां बीजं स्वराश्शक्तयः। इति वा। क्लां हृत्। क्लीं शिरः। इत्यङ्गन्यासः। मोक्षार्थे विनियोगः।

"हस्ते बिभ्रत्सरसिजगदाशङ्खचक्राणि विद्यां
[1]पद्मादर्शौ कनककलशं मेघविद्युद्विलासम्।
वामोत्तुङ्गस्तनमविरलाकल्पनाश्लेषलोभात्[2]
एकीभूतं वपुरवतु नः पुण्डरीकाक्षलक्ष्म्याः॥

इति ध्यात्वा, ओं अं वासुदेवाय लक्ष्म्यै नमः, ओं आं सङ्कर्षणाय कीर्त्यै नमः, भ्रुवोः। ओं इं प्रद्युम्नाय नयायै नमः, ओं ईं अनिरुद्धाय मायायै नमः, नेत्रयोः। ओं उं केशवाय श्रियै नमः, ओं ऊं नारायणाय वागीश्वर्यै नमः, श्रोत्रयोः। ओं ऋं माधवाय कान्त्यै नमः, ओं ॠं गोविन्दाय क्रियायै नमः, नासयोः। ओं ऌं विष्णवे शक्त्यै नमः, ओं ॡं मधुसूदनाय विभूत्यै नमः, कपोलयोः। ओं एं त्रिविक्रमाय इच्छायै नमः ओं ऐं वामनाय प्रीत्यै नमः, ओष्ठयोः। ओं ओं श्रीधराय नत्यै नमः, ओं औं हृषीकेशाय मायायै नमः, दन्तपङ्क्तयोः। ओं अं पद्मनाभाय श्रियै नमः ओं अः दामोदराय महिम्ने नमः जिह्वामूलाग्रयोः। ओं कं पद्मनाभाय धियै नमः। ओं खं ध्रुवाय तारायै नमः। ओं गं अनन्ताय वारुण्यै नमः। ओं घं शक्त्यात्मने शक्त्यै नमः। ओं ङं मधुसूदनाय पद्मायै नमः। ओं चं विद्याधिदेवताय विद्यायै नमः। ओं छं कपिलाय साङ्ख्यायै नमः।

---

1 पद्मापर्शन - O. M. 2 भोगात् O. M.



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ओं जं विश्वरूपाय विश्वायै नमः । ओं झं हंसाय खगायै नमः । ओं ञं क्रोधात्मने भुवे नमः । ओं टं वडवावक्त्राय गवे नमः । ओं ठं धर्माय लक्ष्म्यै नमः । ओं डं वागीश्वराय वागीश्वर्यै नमः । ओं ढं एकार्णवशशयनाय अमृतायै नमः । ओं णं कूर्माय धरण्यै नमः । ओं तं वराहाय छायायै नमः । ओं थं नरसिंहाय नारसिंह्यै नमः । ओं दं अमृताहरणाय सुधायै नमः । ओं धं श्रीपतये श्रियै नमः । ओं नं कान्ताय कान्त्यै नमः । इति दोःपत्सन्ध्यङ्गुल्यग्रेषु कचटत वर्गान् न्यसेत् । ओं पं राहुजिते विश्वायै नमः । दक्षिणपार्श्वे । ओं फं कालनेमिघ्ने कामायै नमः वामपार्श्वे । ओं बं पारिजातहराय सत्यायै नमः, पृष्ठे । ओं भं शान्तात्मने शान्त्यै नमः उदरे । ओं मं दत्तात्रेयाय सरोरुहायै नमः नाभौ । ओं यं न्यग्रोधशायिने मायाय नमः नाभिस्थ वायौ । ओं रं एकशृङ्गाय पद्मासनायै नमः नाभिस्थ जाठराग्नौ । ओं लं वामनाय खर्वायै नमः हारे । ओं वं त्रिविक्रमाय विक्रान्त्यै नमः कटिसूत्रे । ओं शं नराय नरसंभवायै नमः दक्षिणकुण्डले । ओं षं नारायणाय नारायण्यै नमः वामकुण्डले । ओं सं हरये हरिप्रीत्यै नमः हृत्पद्मे । ओं हं कृष्णाय गन्धायै नमः परमात्मनि । ओं क्षं परशुरामाय काश्यप्यै नमः देह-प्रभायाम् । ओं रं रामाय वैदेह्यै नमः नासाग्रे । ओं यमाय वेदविदे निद्रायै नमः हृदये । ओं जिह्वामूलीयाय कल्किने पद्मिन्यै नमः, जिह्वामूले । ओं उपध्मानीयाय पातालशायिने नागशायिन्यै नमः, ओष्ठयोः । इति मातृकान्यासंकुर्यात् । अत्र वैदिकं, तान्त्रिकं, वैदिकतान्त्रिकञ्चेति समाराधनं त्रिविधम् । वैदिकं नाम पुरुषसूक्तऋग्भिर्वा अन्यैर्वेदमन्त्रैर्वा क्रियमाणं समाराधनम् । तान्त्रिकं नाम भगवच्छास्त्रोक्तैर्नारायणाष्टाक्षर-

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वासुदेवद्वादशाक्षरविष्णुषडक्षरद्वयाख्यमन्त्ररत्नविष्णुगायत्रीरूपैर्मन्त्रैः क्रियमाणै-स्समाराधनमिति । वैदिकतान्त्रिकं नाम उक्तेषु भगवन्मन्त्रेषु केनचिदेकेन सहितैः वेदोक्तमन्त्रैस्समाराधनमिति ।

अथ समाराधनोपयुक्तमन्त्राणामृषिच्छन्दो देवतानि अनुसन्धाय समाराधनमारभेत् । यथा-अस्य श्री प्रणवमन्त्रस्य अन्तर्यामि ऋषिः, देवी गायत्री छन्दः, परमात्मा देवता । अं बीजं, उं शक्तिः, मं कीलकम्, बुद्धि-स्तत्वं, परमव्योमक्षेत्रं, शुक्लो वर्णः । भगवत्प्रीत्यर्थं उच्छ्वासनिश्वासरूपेण षट्शताधिकैकविंशतिसहस्रकृत्वः प्रणवजपं करिष्ये । आं ज्ञानाय हृदयाय नमः । ऐं ऐश्वर्याय शिरसे स्वाहा । ऊं शक्त्यै शिखायै वौषट् । ऐं बलाय कवचाय हुं । औं तेजसे नेत्राभ्यं वौषट् । अः वीर्यायास्त्राय फट् । अं ज्ञानाय हृदयाय नमः । ईं ऐश्वर्याय पृष्ठाय नमः । ऊं शक्त्यै बाहुभ्यां नमः ऐं बलाय ऊरुभ्यां नमः । औं तेजसे जानुभ्यां नमः । अः वीर्याय पादाभ्यां नमः । इत्यङ्गन्यासंकुर्यात् । ओं भूः ज्ञानाय हृदयाय नमः । ओं भुवः ऐश्वर्याय शिरसे स्वाहा । ओं सुवः शक्त्यै शिखायै वौषट् । ओं महः बलाय कवचाय हुं । ओं जनः तेजसे नेत्रत्रयाय वौषट् । ओं तपः वीर्याय अस्त्राय फट् । ओं सत्यं परमात्मने हृदयाय नमः । इति वा अङ्गन्यासं कृत्वा ॥

विष्णुं भास्वत्किरीटांगदवलयगलाकल्पहारोदराङ्घ्रि-
[1]श्रोणीभूषं सवक्षो मणिमकरमहाकुण्डलामण्डिताङ्गम् ।
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयमाशा
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥

---

1 श्रोणीभूषादिवेषो - O. M.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति ध्यात्वा प्रणवजपं कृत्वा, अस्य श्रीप्रसादमन्त्रस्य अन्तर्यामि ऋषिः। गायत्री छन्दः। परमात्मा देवता। भगवत्प्रीत्यर्थं उच्छ्वासनिश्वासरूपेण षट्छताधिकैकविंशतिसहस्रकृत्वः प्रसादमन्त्रजपं करिष्ये। हां ज्ञानाय हृदयाय नमः। हीं ऐश्वर्यायशिरसे स्वाहा। हूं शक्त्यै शिखायै वौषट्, हैं बलायकवचायहुं। हौं तेजसे नेत्राभ्यां वौषट्। हः वीर्यायास्त्राय फट्। हां ज्ञानाय उदराय नमः; हीं ऐश्वर्याय पृष्ठाय नमः। हूं शक्त्यै बाहुभ्यां नमः। हैं बलाय ऊरुभ्यां नमः। हौं तेजसे जानुभ्यां नमः। हः वीर्यायास्त्राय फट्। इत्यङ्गन्यासं कृत्वा हौं इति प्रसादमन्त्रजपं कृत्वा

अजपामन्त्रस्य ब्रह्माऋषिः, गायत्रीछन्दः, हंसो देवता हं बीजम्। राश शक्तिः। भगवत्प्रीत्यर्थमुच्छ्वासनिश्वासरूपेण षट्छताधिकैकविंशति सहस्रकृत्वः अजपामन्त्रजपं करिष्ये।

सूर्याय ज्ञानाय हृदयाय नमः।

सोमायैश्वर्याय शिरसे स्वाहा।

निरञ्जनाय शक्त्यै शिखायै वौषट्।

निराभासाय बलाय कवचायहुं।

हंसाय वीर्यायास्त्रायफट्।

हंसां ज्ञानाय हृदयाय नमः।

हंसीं ऐश्वर्याय शिरसे स्वाहा।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हंसूं शक्त्यै शिखायै वौषट्।

हंसैं बलाय कवचाय हुम्।

हंसौं तेजसे नेत्राभ्यां वौषट्।

हंसः वीर्यायास्त्राय फट्।

इति अङ्गन्यासङ्कृत्वा "हंसः" इत्यजपामन्त्रजपङ्कुर्यात्।

पञ्चोपनिषन्मन्त्रस्य ब्रह्मवसिष्ठपराशरव्यासशुका ऋषयः गायत्र्युष्णिगनुष्टुप्त्रिष्टुप्जगत्यः छंदांसि। आकाशवाय्वग्न्यंबुपृथिव्यो देवताः। षकार यकार रेफ वकारलकारा बीजानि। नमश्शक्तिः। देहे पञ्चोपनिषण्यास्वार्थे विनियोगः।

ओं षौं नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः।

ओं यां नमः पराय पुरुषात्मने सङ्कर्षणाय नमः।

ओं रां नमः पराय विश्वात्मने अनिरुद्धाय नमः।

ओं वां नमः पराय निवृत्यात्मने प्रद्युम्नाय नमः

ओं लां नमः पराय सर्वात्मने नारायणाय नमः।

इति शिरो नासाग्र हृदय गुह्य पादेषु विन्यसेत्।

इति सृष्टिन्यासः। विपर्ययेन संहारन्यासः।

इमान्पञ्चोपनिषण्मन्त्रान् यथाशक्ति जपेत्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य श्रीमदष्टाक्षरमहामन्त्रस्य अन्तर्यामीभगवान्नारायणऋषिः बदरिकाश्रमवासी नारायणऋषिरितिवा। देवि गयत्री छन्दः परमात्मा भगवन्नारायणो देवता। ओं बीजं, [1]आयशक्तिः, अं बीजं, उंशक्ति, रितिवा मं कीलकं। परमव्योम क्षेत्रम्। बुद्धिस्तत्त्वं। शुक्लो वर्णः। ह्रीं कवचम्। क्लीं अस्त्रम्। उदात्तस्वरः। श्रीमन्नारायण प्रीत्यर्थे विनियोगः। ओं नमः पराय श्रीमदाष्टाक्षरप्रदात्रे गुरवे नम इति शिरसि। ओं नमः परेभ्यो श्रीमदष्टाक्षरप्रदातृभ्योऽस्मत्परमगुरुभ्योऽस्मत्सर्वगुरुभ्यश्च नमः इति शिखायां। ओं नमः पराय श्रीमदष्टाक्षरात्मने मन्त्रराजाय नम इति हृदये। ओं नमः पराय श्रीमदष्टाक्षरछन्दसे देव्यै गायत्र्यै नम इति मुखे। ओं नमः पराय श्रीमदष्टाक्षरऋषये अन्तर्यामिने नारायणायेति शिरसि। ओं नमः पराय श्रीमदष्टाक्षरपरमात्मने नारायणायेति हृदये, ओं नमः पराय श्रीमदष्टाक्षरबीजभूताय अकारादुत्थिताय प्रणवात्मने भगवते नारायणायेति गुह्ये। ओं नमः पराय श्रीमदष्टाक्षरशक्तिभूताय उंकारात्मने भगवते नारायणायेति पादयोर्विन्यस्य। आकूर्परमङ्गुल्यग्रपर्यन्तं मूलमन्त्रेण करद्वयेऽपि अन्तर्बहिश्च पार्श्वयोश्च करतलपृष्ठयोः करतलपार्श्वयोश्च त्रिस्त्रिः परामृश्य करतलमध्ययोर्मध्यमाङ्गुलिभ्यां प्रत्येकं मूलमन्त्रं जपेत्। करद्वयेऽपि दक्षिणमारभ्य तर्जन्यादि तर्जन्यन्तं सर्वास्वङ्गुलीषु सबिन्दुकानि प्रणवसम्पुटितानि मन्त्राक्षराण्यष्टौ क्रमेणाङ्गुष्ठेनन्यसेत्। अयं सृष्टिन्यासो ब्रह्मचारिणः। करद्वयेऽपि दक्षिणमारभ्य तत्तत्तर्जन्यादि तत्तत्कनिष्ठिकान्तन्यासः। स्थिति न्यासोऽयंगृहस्थस्य।

---

[1] आयुदशक्तिः - O. M.

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाममारभ्य तर्जन्यादि तर्जन्यन्तन्यासः संहारन्यासोऽयं वानप्रस्थयत्योः। करद्वयेप्युभयाङ्गुष्ठमारभ्य तत्तत्कनिष्ठिकान्तासु व्याप्तत्वेन वा न्यसेत्। एवमङ्गुलिन्यासङ्कृत्वा अष्टाक्षरान्तस्थानि प्रणवसंपुटितान्येकैकानि अक्षराणि क्रमेण दक्षिणाङ्गुष्ठप्रथमपर्वारभ्य वामकनिष्ठिकान्त्यपर्वपर्यन्तं विन्यस्य तुरीयावृत्तावशिष्टवर्णद्वयेन करतलकरपृष्ठौ संमृशेत्। एवं पर्वन्यासं कृत्वा ओं कठोत्काय स्वाहा ज्ञानाय हृदयाय नमः। ओं महोत्काय स्वाहा ऐश्वर्याय शिरसे स्वाहा। ओं वीरोत्काय स्वाहा शक्त्यै शिखायै वौषट्। ओं व्युत्काय स्वाहा बलाय कवचाय हुं। ओं सहस्रोत्काय स्वाहा तेजसे नेत्रद्वयाय वौषट्। इति पञ्चाङ्ग न्यासं कृत्वा ओं ओं ज्ञनाय हृदयाय नमः। ओं नं ऐश्वर्याय शिरसेस्वाहा। ओं मों शक्त्यै शिखायै वौषट्। ओं नां बलाय कवचाय हुं। कवचानुबन्धानुकारिणाकरद्वयेन कर्णादिकट्यन्तस्थाने। ओं रां तेजसे नेत्राभ्यां वौषट् तर्जनी मध्यमाभ्यां नेत्रयोः। ओं यं वीर्यायास्त्रायफट् समुष्टिकाङ्गुष्ठतर्जनीभ्यां भुजाग्रयोः। ओं णां तेजसे उदराय नमः। ओं यं तेजसे पृष्ठाभ्यां नमः। ओं यं तेजसे बाहुभ्यां नमः। ओं यं तेजसे ऊरुभ्यां नमः। ओं यं तेजसे जानुभ्यां नमः। एवमुदरपृष्ठबाहूरुजानुषु अङ्गुष्ठरहिताभिरङ्गुलीभिर्न्यसेत्। ओं यं तेजसे पादाभ्यां नमः सर्वाभिरङ्गुलीभिः पादयेः। इति द्वादशाङ्गन्यासं कृत्वा ओं पद्माय नमः दक्षिणकरतले। ओं कौमोदक्यै गदाधिपत्न्यै नमः वामकरतले। ओं सुदर्शनाय हेतिराजाय नमः दक्षिणभुजे। ओं पाञ्चजन्याय शङ्खाधिपतये नमः वामभुजे। ओं किरीटाय मकुटाधिपतये नमः शिरसि। ओं श्रीवत्साय श्रीनिवासायनमः दक्षिणोरसि। ओं श्रीकौस्तुभाय दिव्यरत्नाय नमः उरो मध्ये। ओं श्री वैजयन्त्यै वनमालायै नमः पादयोः। ओं श्रां श्रियै नमः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दक्षिणपार्श्वे । ओं ह्रीं पुष्ट्यै नमः वामपार्श्वे । ओं सैं सरस्वत्यै नमः मुखे । द्रां निद्रायै नमः पश्चाद्भागे । ओं क्लीं कान्त्यै नमः ऊर्ध्वदेहे ओं कं पृथिव्यै नमः पादयोः । ओं गरुडाय नम ऊर्वोः । यद्वा दक्षिणाङ्गुष्ठमारभ्य वामकनिष्ठिकान्तं किरीटादिपृथिव्यन्तानां न्यासः । गरुडं करतलयोर्न्यसेत् ।

अथ देहन्यासः । मूर्धादिव्यापकत्वेन मूलमन्त्रेण त्रिः परामृशेत् । एते न्यासाः सर्वेषां समानाः । अथ सबिन्दुकानि प्रणवसम्पुटितानि अष्टाक्षराणि क्रमेण मूर्धादिपादान्तेषु स्थातेषु न्यसेत् । सृष्टिन्यासोऽयं ब्रह्मचारिणः ।

एवं नाभ्यादि पादान्तेषु मूर्धादि हृदयपर्यन्तेषु न्यसेत् । स्थिति न्यासोऽयं गृहस्थस्य ।

एवं पादादिमूर्धान्तेषु न्यसेत् । संहारन्यासोऽयं वानस्थयत्योः । अत्र मूर्ध्नि मध्यमया, तर्जनी मध्यमाभ्यां नेत्रयोः, अनामिकाङ्गुष्ठाभ्यां मुखमध्ये, अङ्गुष्ठतर्जनीभ्यां हृदये, नाभौकनिष्ठाङ्गुष्ठाभ्यां, गुह्ये जान्वोश्च अङ्गुष्ठरहिताभिरङ्गुलीभिः, सर्वाभिरङ्गुलीभिः पादयो र्न्यसेत् । पादयोः जान्वोः ऊर्वोः उदरे हृदि, मुखे शिरसि चैवं तैः क्रमात् व्युत्क्रमतो न्यसेत् । अथ मूलमन्त्रेण शिरःप्रभृतिपादपर्यन्तं सर्वाङ्गन्यासः । ततोऽस्त्रमन्त्रेण दिग्बन्धः । अथवा सबिन्दुकै र्मन्त्राक्षरैरष्टभिर्दिग्बन्धः । प्रणवेनोर्ध्व मध-श्चेतिवा दिग्बन्धः । अथकरद्वयेन अष्टाक्षरञ्चक्रं बद्ध्वा आत्मनः प्रादक्षिण्येन ओं श्री सुदर्शनाय हेतिराजाय नम इति चक्रमुद्रया रक्षां कुर्यात् ।

अत्र केचित् संहितान्तरे पद्मं दक्षिण भुजे । गदां वामे, दक्षिणे सुदर्शनं, वामे शङ्खं मुद्रारूपेण न्यसेत् । किरीटं शिरसि । श्रीवत्सं दक्षिणोरसि ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उरोर्मध्ये कौस्तुभं। वैजयन्तीञ्चपार्श्वयोः श्रीयं दक्षिणपार्श्वे। पुष्टिं वामपार्श्वके सरस्वतींमुखे। निद्रां पश्चाद्भागे च विन्यसेत्। कान्तिमूर्ध्वदेशे। पृथिवीं पादयोः। गरुडमूर्व्योरिति वदन्ति।

"सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो जनयतुजगतां शर्म वैकुण्ठनाथः" ॥

"पद्माक्षमापरिगतं विमलेन्द्रनील
श्यामं चतुर्भुजधृतारिगदाब्जयष्टिम्।
केयूरहारवनदामकिरोटकाञ्ची
श्रीवत्स कैस्तुभमुखाभरणैरुपेतम् ॥
श्रीमत्पिशङ्गवदनं सनकादि भक्तैः
साङ्गैस्तुतञ्च निगमोपनिषत्पुराणैः।
सानुग्रहस्मितकृपादृशमाश्रितानां
नारायणं भवहरं शरणं प्रपद्ये ॥ इति वा ध्यात्वा

मानसैरुपचारैरभ्यर्च्य अष्टोत्तरसहस्रं अष्टोत्तरशतं अष्टाविंशति वारं वा कुर्यात्।

"षष्ठाद्ययोरुदात्तःस्यात् स्वरितोन्त्यद्वितीययोः।
प्रचयस्त्रिचतुर्थाभ्यां निहतं पञ्चमाक्षरम् ॥


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दक्षिणपार्श्वे । ओं ह्रीं पुष्ट्यै नमः वामपार्श्वे । ओं सैं सरस्वत्यै नमः मुखे । द्रां निद्रायै नमः पश्चाद्भागे । ओं क्लीं कान्त्यै नमः ऊर्ध्वदेहे ओं कं पृथिव्यै नमः पादयोः । ओं गरुडाय नम ऊर्वोः । यद्वा दक्षिणाङ्गुष्ठमारभ्य वामकनिष्ठिकान्तं किरीटादिपृथिव्यन्तानां न्यासः । गरुडं करतलयोर्न्यसेत् ।

अथ देहन्यासः । मूर्धादिव्यापकत्वेन मूलमन्त्रेण त्रिः परामृशेत् । एते न्यासाः सर्वेषां समानाः । अथ सबिन्दुकानि प्रणवसम्पुटितानि अष्टाक्षराणि क्रमेण मूर्धादिपादान्तेषु स्थानेषु न्यसेत् । सृष्टिन्यासोऽयं ब्रह्मचारिणः ।

एवं नाभ्यादि पादान्तेषु मूर्धादि हृदयपर्यन्तेषु न्यसेत् । स्थिति न्यासोऽयं गृहस्थस्य ।

एवं पादादिमूर्धान्तेषु न्यसेत् । संहारन्यासोऽयं वानस्थयत्योः । अत्र मूर्ध्नि मध्यमया, तर्जनी मध्यमाभ्यां नेत्रयोः, अनामिकाङ्गुष्ठाभ्यां मुखमध्ये, अङ्गुष्ठतर्जनीभ्यां हृदये, नाभौकनिष्ठाङ्गुष्ठाभ्यां, गुह्ये जान्वोश्च अङ्गुष्ठरहिताभिरङ्गुलीभिः, सर्वाभिरङ्गुलीभिः पादयो र्न्यसेत् । पादयोः जान्वोः ऊर्वोः उदरे हृदि, मुखे शिरसि चैवं तैः क्रमात् व्युत्क्रमतो न्यसेत् । अथ मूलमन्त्रेण शिरःप्रभृतिपादपर्यन्तं सर्वाङ्गन्यासः । ततोऽस्त्रमन्त्रेण दिग्बन्धः । अथवा सबिन्दुकै र्मन्त्राक्षरैरष्टभिर्दिग्बन्धः । प्रणवेनोर्ध्वमध- श्चेतिवा दिग्बन्धः । अथकरद्वयेन अष्टाक्षरञ्चक्रं बद्ध्वा आत्मनः प्रादक्षिण्येन ओं श्री सुदर्शनाय हेतिराजाय नम इति चक्रमुद्रया रक्षां कुर्यात् ।

अत्र केचित् संहितान्तरे पद्मं दक्षिण भुजे । गदां वामे, दक्षिणे सुदर्शनं, वामे शङ्खं मुद्रारूपेण न्यसेत् । किरीटं शिरसि । श्रीवत्सं दक्षिणोरसि ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उरोर्मध्ये कौस्तुभं। वैजयन्तीञ्चपार्श्वयोः श्रीयं दक्षिणपार्श्वे। पुष्टिं वामपार्श्वके सरस्वतींमुखे। निद्रां पश्चाद्भागे च विन्यसेत्। कान्तिमूर्ध्वदेशे। पृथिवीं पादयोः। गरुडमूर्व्योरिति वदन्ति।

"सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा
जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे
देवीभूषादिजुष्टो जनयतुजगतां शर्म वैकुण्ठनाथः" ॥

"पद्माक्षमापरिगतं विमलेन्द्रनील
श्यामं चतुर्भुजधृतारिगदाब्जयष्टिम्।
केयूरहारवनदामकिरीटकाञ्ची
श्रीवत्स कैस्तुभमुखाभरणैरुपेतम् ॥
श्रीमत्पिशङ्गवदनं सनकादि भक्तैः
साङ्गैस्तुतञ्च निगमोपनिषत्पुराणैः।
सानुग्रहस्मितकृपादृशमाश्रितानां
नारायणं भवहरं शरणं प्रपद्ये ॥ इति वा ध्यात्वा मानसैरुपचारैरभ्यर्च्य अष्टोत्तरसहस्रं अष्टोत्तरशतं अष्टाविंशति वारं वा कुर्यात्।

"षष्ठाद्ययोरुदात्तःस्यात् स्वरितोन्त्यद्वितीययोः।
प्रचयस्त्रिचतुर्थाभ्यां निहतं पञ्चमाक्षरम् ॥

 CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उदात्तस्वर ओङ्कार इत्यष्टाक्षर लक्षणम् ।

"ओं नमो नारायणाय" ॥ इति मन्त्रः इत्येव-मष्टाक्षरमन्त्रजपं कुर्यात् ।

अस्य श्रीद्वयाख्य महामन्त्रस्य लक्ष्मीनारायणऋषिः गायत्री छन्दः । विष्वक्सेन ऋषिः अतिच्छन्दः इति वा । श्रीमन्नारायणः परमात्मा देवता । ओ बीजं । नमश्शक्तिः । हूं कीलकं । श्रीं कवचं । ऐं अस्त्रं । श्वेतो वर्णः मोक्षार्थे विनियोगः । ओं श्रीमन्नारायणचरणौ अङ्गुष्ठाभ्यां नमः । शरणं तर्जनीभ्यां नमः । ओं प्रपद्ये मध्यमाभ्यां नमः । श्रीमते अनामिकाभ्यां नमः । ओं नारायणाय कनिष्ठिकाभ्यां नमः । ओं नमः करतलकरपृष्ठाभ्यां नमः । इत्यङ्गुलिन्यासंकृत्वा प्रणवसंपुटितमाद्यमक्षरं करतलयोर्विन्यस्य शेषाणि चतुर्विंशत्यक्षराणि प्रणवसंपुटितानि चतुर्विंशतिपर्वसु विन्यसेत् । ओं श्रीमन्नारायणचरणौ ज्ञानाय हृदयाय नमः शरणं ऐश्वर्याय शिरसे स्वाहा । प्रपद्ये शक्त्यै शिखायै वौषट् । श्रीमते बलायकवचायहुं । नारायणाय तेजसे नेत्राभ्यां वौषट् । नमः वीर्यायास्त्राय फडिति षडङ्गन्यासं कृत्वा

मूर्ध्नि फालनेत्रनासाश्रवणेषु तथानने ।<br>
भुजयोर्हृत्प्रदेशे च स्तनयोर्नाभिमण्डले ॥<br>
पृष्ठे च जघने कट्योरूर्वोर्जान्वोश्च पादयोः ।<br>
पञ्चविंशाक्षराण्यस्य क्रमेणाङ्गेषु विन्यसेत् ॥

एवं न्यासं कृत्वा ध्यानंकुर्यात् ।

इन्दीवरदलश्यामं कोटिसूर्याग्निवर्चसम् ।<br>
चतुर्भुजं सुन्दराङ्गं सर्वाभरणभूषितम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पद्मासनगतं देवं पुण्डरीकदलेक्षणम् ।
रत्नारविन्दसदृशपदहस्ततलाञ्चितम् ॥

माणिक्यमकुटोपेतं नीलकुञ्चितशीर्षजं
श्रीवत्सकौस्तुभोरस्कं वनमालाविराजितम् ।
दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पावतंसकम्
हारकुण्डलकेयूरनूपुरादिविराजितम् ॥

कटकैरङ्गुलीयैश्च पीतवस्त्रेणशोभितं ।
शङ्खचक्रगदापद्मपाणिनं पुरुषोत्तमम् ॥

वामांङ्के चिन्तयेत्तस्य देवीं कमललोचनाम् ।
तरुणींसुकुमाराङ्गीं सर्वलक्षणशोभिताम् ॥

दुकूलवस्त्रसंवीतां सर्वाभरणभूषिताम् ।
तप्तकाञ्चनसङ्काशां पीनोन्नतपयोधराम् ॥

रत्नकुण्डलसंयुक्तां नीलकुन्तलशीर्षजाम् ।
दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पावतंसकाम् ॥

रत्नाब्जं मातुलिङ्गंच दर्पणंवरदंतथा ।
देवीं च बिभ्रतींदोर्भिश्चिन्तयेदिष्टदांसदा ॥

एवं ध्यात्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

" अर्कौघाभं किरीटान्वितं मकरलसत्कुण्डलं दीप्तराजत्,
केयूरं कौस्तुभाभाशबलरुचिरभारक्तपीतांम्बरञ्च " ।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोस्सक्तचक्राम्भोरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥

इति वा ध्यात्वा द्वयाख्यमन्त्ररत्नजपं कृत्वा

अथ चरमश्लोकमन्त्रन्यासः । ओं अस्य चरमश्लोक महामन्त्रस्य वेदव्यासो भगवानृषिः । अनुष्टुप्छन्दः । परमात्मा श्री कृष्णः श्रीमन्नारायणो देवता । अशोच्यानन्वशोचस्त्वमिति बीजं । सर्वधर्मान् परित्यज्येति शक्तिः । ऊर्ध्वमूलमधश्शाखमिति कीलकं । श्री वासुदेव प्रीत्यर्थे विनियोगः । सर्वधर्मान्परित्यज्य - अङ्गुष्ठाभ्यां नमः । मामेकं शरणं व्रज तर्जनीभ्यां नमः । अहं त्वा सर्वपापेभ्यो मध्यमाभ्यां नमः । मोक्षयिष्यामि मा शुचः - अनामिकाभ्यां नमः । सर्वधर्मान् .... व्रज कनिष्ठिकाभ्यां नमः । अहंत्वा .... मा शुचः करतलकरपृष्ठाभ्यां नमः । सर्वधर्मान् परित्यज्य - ज्ञानाय हृदयाय नमः । मां+व्रज ऐश्वर्याय शिरसे स्वाहा । अहं+पापेभ्यः शक्त्यै शिखायै वौषट् । मोक्षयिष्यामि मा शुचः बलाय कवचाय हुम् । सर्वधर्मान्+व्रज तेजसे नेत्राभ्यां वौषट् । अहं+माशुचः वीयय अस्त्राय फट् । अर्कौघाभमिति ध्यानम्, यथाशक्ति चरमश्लोक मन्त्रजपं कुर्यात् ।

अस्य श्रीवासुदेव द्वादशाक्षरमहामन्त्रस्य ब्रह्मा ऋषिः । वासुदेव ऋषिरितिवा । देवीगायत्री छन्दः । भगवान् वासुदेवः परमात्मा देवता । ओं बीजं । नं शक्तिः । अं बीजं । आयशक्तिरितिवा । वासुदेवायेतिकवचम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भगवत इति कीलकम् । श्वेतो वर्णः । बुद्धिस्तत्त्वं । परं व्योम क्षेत्रम् । श्रीवासुदेवप्रसादसिद्ध्यर्थे जपे विनियोगः । प्रणवसंपुटितैर्द्वादशाक्षरैरङ्गुलिपर्वसुन्यासंकुर्यात् । तत्र त्रिधाऽऽवृत्तौ अवशिष्टवर्णषट्कैर्दक्षिणवामप्रकोष्ठौ करतले करपृष्ठे च संमृशेत् । प्रणवसंपुटितैरेवद्वादशाक्षरैर्दशाङ्गुलिन्यासंकुर्वन् अवशिष्टवर्णद्वयेन करतलकरपृष्ठौ संमृशेत् । पादयोर्जान्वोरुर्वोर्नाभौकुक्षौततोहृदि । भुजयोस्कन्धयोर्वक्त्रे नासालीकशिरस्सु च ॥ एवं क्रमेण विन्यस्य तारसम्पुटिताक्षरैः शिरःप्रभृतिपादान्तं विन्यसेत् । तैः क्रमात्सुधीः । अथ अङ्गन्यासं पदैः कुर्यात् । अयं सृष्टिन्यासो ब्रह्मचारिणः ।

नाभ्यादि पादान्तेषु शीर्षादिकुक्षिपर्यन्तं स्थितिन्यासः । पादादिशिरःपर्यन्तं संहारन्यासः ।

सपादजानुयुगले लिङ्गनाभ्युदरेषु च ।
हृद्दोर्गलास्यदृङ्मस्तशिखास्वक्षरशोन्यसेत् ॥

अयं न्यासो वनस्थयत्योः ।

शिखाललाटनेत्रास्यगलदोरासनेष्वपि ।
सकुक्षिनाभिलिङ्गाख्यजानुपादेषु विन्यसेत् ॥

अयं सृष्टिन्यासो ब्रह्मचारिणः ।

हृत्कुक्षिनाभिषु तथा गुह्यजानुपदेष्वथ ।
करकर्णास्यदृङ्मस्तशिखासूर्ध्वंश्च विन्यसेत् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अयं स्थितिन्यासो गृहस्थस्य। तत्र दक्षिणहस्थे ओं ओं ज्ञानाय हृदयाय नमः। ओं नं ऐश्वर्याय शिरसे स्वाहा। ओं मों शक्त्यै शिखायै वौषट्। ओं भं बलाय कवचायहुं। ओं गं वीर्यायास्त्राय फट्। ओं वं तेजसे नेत्राभ्यां वौषट्। वामहस्ते ओं तें ज्ञानाय हृदयाय नमः इति करतलं। ओं वां ऐश्वर्याय पृष्ठाय नमः। ओं सुं शक्त्यै बाहुभ्यां नमः। ओं दें बलाय ऊरुभ्यां नमः। ओं वां तेजसे जानुभ्यां नमः। ओं यं तेजसे वीर्याय पादाभ्यां नमः। वामकरतलमारभ्य दक्षिणकरतलपर्यन्तं संहारन्यासः वनस्थयत्योः। दक्षिणकरतलमारभ्य वामकरतलपर्यन्तं सृष्टिन्यासो ब्रह्मचाणिः। पादयोर्जान्वोरुर्वोरित्यदिना सपादजान्वित्यादिना वा देहन्यासं कुर्यात्। ओं ज्ञानायहृदयाय नमः। ओं नमः ऐश्वर्याय शिरसे स्वाहा। ओं भगवते शक्त्यै शिखायै वौषट्। ओं वासुदेवाय बलायकवचायहुम्। ओं नमो भगवते तेजसे नेत्राभ्यां वौषट्। वासुदेवाय वीर्यायस्त्रायफडिति षडङ्गन्यासं कुर्यात्। यद्वा ओं आचक्राय स्वाहा ज्ञानायहृदयाय नमः। ओं विचक्राय स्वाहा ऐश्वर्याय शिरसे स्वाहा। ओं सुचक्राय स्वाहा शक्त्यै शिखायै वौषट्। ओं त्रैलोक्यचक्राय स्वाहा बलाय कवचाय हुम्। ओं महाचक्राय स्वाहा तेजसे नेत्रद्वयाय वौषट्। ओं असुरान्तकचक्राय स्वाहा वीर्यायास्त्राय फडितिवा षडङ्गन्यासंकुर्यात्। यद्वा-कुद्धोल्कायफट् ज्ञानाय-हृदयाय नमः। ओं महोल्कायफट् ऐश्वर्याय शिरसे स्वाहा। ओं वीरोल्काय फट् शक्त्यै शिखायै वौषट्। व्युल्काय फट् बलायकवचाय हुम्। ओं सहस्रोल्काय फट् तेजसेनेत्रद्वयाय वौषट्। तेज उल्कायफट् वीर्यायास्त्राय फडिति वा षडङ्गन्यासं कुर्यात्।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"ध्यानम्"

क्षीराब्धौ शेषपर्यङ्के समासीनंश्रिया सह ।
नीलजीमूतसङ्काशं तप्तकाञ्चन भूषितम् ॥

पीताम्बरधरं देवं रत्नाब्जदललोचनम् ।
दीर्घैश्चतुर्भिर्दोर्भिश्च दिव्याभरणभूषितैः ॥

शंखं चक्रं गदां शङ्गं बिभ्राणं परमेश्वरम् ।
नानाकुसुमसंबन्ध नीलकुञ्चितशीर्षजम् ॥

श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ।
समाश्लिष्टं श्रियादेव्या पद्मया पद्महस्तया ॥

स्तूयमानं विमानस्थै र्देवगन्धर्वकिन्नरैः ।
मुनिभिस्सनकाद्यै श्च सेवितञ्च सुरर्षिभिः ॥

इति ध्यत्वा

"विष्णुं शारदचन्द्रकोटिसदृशं शंखंरथाङ्गं गदां
अम्भोजं दध तं सिताब्जनिलयं कान्त्या जगन्मोहनम ।
आबद्धाङ्गदहारकुण्डलमहारत्नस्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रै स्तुतम ॥

इति ध्यात्वा "ओं नमो भगवते वासुदेवाय" इति द्वादशाक्षरमन्त्रं जपेत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अस्य श्रीविष्णुषडक्षरमहामन्त्रस्य ब्रह्माऋषिः । गात्रीछन्दः श्रीमहाविष्णुर्देवता । ओं बीजं नमश्शक्तिः । श्री महाविष्णुप्रीत्यर्थे जपे विनियोगः । प्रणवसम्पुटितैर्मन्त्रगतैरक्षरैः पञ्चधाऽऽवृत्तैः पर्वन्यासं कृत्वा द्वेधाऽऽवृत्तैरङ्गुलिन्यासंकृत्वाऽवशिष्टवर्णद्वयेन करतलकरपृष्ठौ संमृश्य मन्त्रगतैस्त्रिभिः पदैर्द्विरावृत्तैर्षडङ्गन्यासंकृत्वा प्रणवसम्पुटितानि मन्त्राक्षराणि मूर्ध्नि आस्ये हृदये बाह्वोः पृष्ठे गुह्ये च इति क्रमाद्विन्यस्य ओं सहस्रारा हुंफडिति चक्रमुद्रया दिग्बन्धनंकृत्वा ध्यानं कुर्यात् । यथा - अधोमुखं हृदयपङ्कजं प्रणवेन उन्मुखीकृत्य तत्वमयानि केसराणि विकसितानिकृत्वा तस्योपरि वह्न्यर्क सोममण्डलानि क्रमेण संचिन्त्य तदुपरि नानारत्नमयं पीठं सञ्चिन्त्य तन्मध्येऽष्टदलपद्मं संचिन्त्य

"तस्मिन्विचिन्तयेद्देवं कोटिशीतांशुवर्चसम्" ।
चतुर्भुजंसुन्दराङ्गं युवानं पद्मलोचनम् ॥

कन्दर्पकोटिलावण्यं सर्वलक्षणलक्षितम् ।
श्लक्ष्णनासालसङ्गण्ड बिंबितोज्वलकुण्डलम् ॥

केयूराङ्गदहाराद्यैः भूषणैरुपशोभितम् ।
दिव्यचन्दनलिप्तांगं दिव्यपुष्पविराजितम् ॥

शङ्खचक्रगदापद्मं धारिणं दोर्भिरुज्वलैः ।
दिव्यपीताम्बरधरं वनमालाविभूषितम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

श्रीवत्सकौस्तुभोरस्कं दिव्यपुष्पावतंसकम् ।
तप्तकाञ्चनवर्णाभं पद्मयापद्महस्तया "
समाश्लिष्टं हरिं देवं चिन्तये हृदि सर्वदा ' ॥

इति ध्यात्वा :–

सशङ्खचक्रं सकिरीटकुण्डलं
सपीतवस्त्रं सरसीरुहेक्षणम् ।
सहारवक्षस्थलकौस्तुभश्रियं
नमामि विष्णुं शिरसा चतुर्भुजम् ॥

इति ध्यात्वा –

" ओं नमो विष्णवे " इति विष्णुषडक्षरमन्त्रं जपेत् ।

अस्य श्री विष्णुगायत्रीमन्त्रस्य ब्रह्माऋषिः । देवीगायत्रीछन्दः । परमात्मा भगवान् विष्णुर्देवता । ओं क्रुद्धोल्कायस्वाहेत्यादिभिः षडङ्गन्यासं कृत्वा –

" मूर्ध्नि फाले नयनयोः नासिकापुटयोस्तथा ।
श्रोत्रयोर्गण्डयोः कर्णेहृदये बाहुमूलयोः ॥

हस्तयोः कुक्षिमध्ये च गुह्ये चोर्वोश्च जङ्घयोः ।
पादयोश्च क्रमादेवं अक्षराणि च विन्यसेत् ॥"


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यानम् –

" कालमेघनिभंसौम्यं चतुर्बाहुं किरीटिनम् ।
शङ्खचक्रगदापाणिं गरुडारूढमच्युतम् ॥ "

इति ध्यात्वा –

" ओं नारायणाय विद्महे वासुदेवाय धीमहि -
तन्नो विष्णुः प्रचोदयात् "

इति विष्णुगायत्रीं जपेत् ।

अस्य श्री श्रीमन्त्रस्य भृगुऋषिः । निचृद्गायत्री छन्दः । श्रीर्देवता । शं बीजं । रं शक्तिः । श्रां हृत् । श्रों शिरः । इत्याद्यंगन्यासं कृत्वा

भूयाद्भूयो द्विपद्माभयवरदकरातप्तकार्तस्वराभा
शुभ्राभेभयुग्मद्वयकरधृतकुंभाद्भिरासिच्यमाना ।
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसिकृतवसतिः पद्मगा श्रीः
श्रियैनः ॥

इति ध्यात्वा :–

" ओं श्रीं " इति श्रीमन्त्रं जपेत् ।

श्रीमत्पुरुषसूक्तमन्त्रस्य श्रीमन्नरायणऋषिः । आदितः पञ्चदशर्चामनुष्टुप्छन्दः, तिसृणां त्रिष्टुप्छन्दः । परमात्मा भगवान्नारायणो देवता । 'पुरुषएवेदं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सर्व'मिति बीजं । एतावनस्य महिमे'ति शक्तिः । 'नान्यःपन्था अयनाय विद्यत' इति कीलकं । श्रीभगवत्समाराधनार्थे विनियोग इत्यनुसन्धाय ओं पुरुषाय हृदयाय नमः । ओं महापुरुषाय शिरसे स्वाहा । ओं ब्रह्म पुरुषाय शिखायै वौषट् । ओं विष्णुपुरुषाय कवचाय हुम् । ओं ईश्वर-पुरुषाय नेत्रद्वयाय वौषट् । ओं आद्यपुरुषाय वीर्यायास्त्राय फडिति षडङ्गन्यासं कृत्वा

"प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणेकरे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणेपदे ॥

पञ्चमीं वामजङ्घायां दक्षिणस्यां तदुत्तरां ।
सप्तमीं वामकट्यां तु दक्षिणस्यांतथाऽष्टमीम् ॥

नवमीं नाभिमध्ये तु दशमीं हृदिविन्यसेत् ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥

त्रयोदशीं दक्षिणेतु तथाऽऽस्येतु चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं न्यस्य न्यसेन्मूर्धनि षोडशीम् ॥"

इत्युक्तप्रकारेण ऋचो विन्यसेत् । इति संहारन्यासः । वैपरीत्येन-सृष्टिन्यासः । नाभ्यादिपादान्तं न्यस्त्वा शिरः प्रभृतिहृदयान्तमिति स्थितिन्यासः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ध्यानम् ॥

गोक्षीराभं पुण्डरीकासनस्थं
चक्राब्जाद्यैर्भूषणैर्भूषिताङ्गम् ।
विष्णुं ध्यात्वा श्रीधराश्लिष्टपार्श्वं
सूक्तेनैनं पौरुषेणार्चयीत ॥

इति ध्यात्वा "पुरुषसूक्तम्" यथाशक्ति जपेत् ।

अस्य श्रीसूक्तमन्त्रस्य श्रीरानन्दकर्दमचिक्लीतेन्दिरासुताश्च ऋषयः । अनुष्टुब्बृहतीत्रिष्टुप्प्रस्तारपङ्क्तयश्चेति छन्दांसि । श्रचग्नी देवते । तत्राग्निरिति नारायणो भगवानुच्यते । हिरण्यवर्णामित्यृग्बीजं कांसोस्मी-त्यृक्छक्तिः । श्री महालक्ष्मीप्रसादसिद्ध्यर्थे जपेविनियोगः । श्री बीजेन करशुद्धिं कृत्वा हिरण्यवर्णायै श्री महालक्ष्म्यै अङ्गुष्ठाभ्यां नमः । सुवर्णवर्णायै श्रीमहालक्ष्म्यै तर्जनीभ्यां नमः । रजतस्रजायै श्रीमहालक्ष्म्यै मध्यमाभ्यां नमः । चन्द्रायै श्रीमहालक्ष्म्यै अनामिकाभ्यां नमः । हिरण्मयायै श्री महालक्ष्म्यै कनिष्ठिकाभ्यां नमः । जातवेदो मआवहायै श्री महालक्ष्म्यै करतलकरपृष्ठाभ्यां नम इत्यङ्गुलिन्यासं कृत्वा ओं हिरण्यवर्णायै श्री माहालक्ष्म्यै हृदयाय नमः । ओं सुवर्णवर्णायै श्रीमहालक्ष्म्यै शिरसे स्वाहा । ओं रजतस्रजायै श्रीमहालक्ष्म्यै शिखायैवौषट् । ओं चन्द्रायै श्रीमहा-लक्ष्म्यै कवचाय हुं । ओं हिरण्मयय्यै श्रीमहालक्ष्म्यै नेत्रद्वयाय वौषट् । जातवेदो मआवहायै श्रीमहालक्ष्म्यै वीर्यायास्त्राय फडिति षडङ्गन्यासं कृत्वा हिरण्यवर्णामिति मूर्ध्नि तांमआवाहेतिनेत्रयोः, अश्वपूर्वामिति कर्णयोः,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कांसोस्मितामितिनासिकायां, चन्द्रां प्रभासामिति मुखे आदित्यवर्णेति कण्ठे उपैतुमामिति बाह्वोः, क्षुत्पिपासामितिहृदये गन्धद्वारामिति नाभौ मनसः काममिति कट्यां कर्दमेनेति गुह्ये । आपः सृजन्त्वित्यूर्वोः, आर्द्रां पुष्करणीमिति जान्वोः । आर्द्रां यःकरणीमिति जङ्घयोः । तांमआवहेति पादयोः इत्यङ्गन्यासं कृत्वा श्री बीजेनव्यापकन्यासं कुर्यात् ।

## अथ ध्यानम

"अरुणकमलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्मांबुजाच ।
मणिमकुटविचित्रालङ्कृताकल्पजालैः
भवतुभुवनमाता सन्ततंश्रीः श्रियैनः ॥

या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गम्भीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया ।
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिताहेमकुंभैः
नित्यं सा पद्महस्ता मम भजतु गृहं सर्व-
माङ्गल्ययुक्ता ॥

चतुर्भुजां सुवर्णाढ्यां पद्ममध्ये व्यवस्थितां ।
दक्षिणेऽभयहस्तांच वामहस्ते वसुप्रदाम् ॥

श्वेतगन्धांशुकान्देवीं हेमपुष्पैरलङ्कृताम ।
स्वतेजसा जगज्जालं ज्वालयन्तीं समन्ततः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूजयामि महालक्ष्मीं सर्वसौख्य प्रदायिनीं ।
पद्मालये पद्महस्ते पद्मास्ये पद्मसंभवे
त्वं मां भजस्व कल्याणि येन सौख्यं भजाम्यहम् ॥

इति ध्यात्वा "श्रीसूक्तम्" यथाशक्ति जपेत् ।

श्री सालग्राममहामन्त्रस्य वेदव्यासो भगवानृषिः । विराट्छन्दः, सालग्रामो देवता । प्रणवो बीजं स्वाहा शक्तिः । भोगमोक्षार्थे विनियोगः । "ओं नमो भगवते श्रीविष्णवे श्रीसालग्रामनिवासिने श्रीमते सर्वाभीष्ट प्रदायिने सकलदुरितनिवारणाय सालग्रामाय स्वहा" इति सालग्राममन्त्रं यथाशक्ति जपेत् ।

ततो भगवद्यागमारभेत । भगवानेव स्वशेषभूतेन मया स्वकीयैरेव कल्याणतमैरौपचारिकसांस्पर्शिकाभ्यवहारिकैर्भोगैरखिलपरिजनपरिच्छदान्वितं स्वात्मानं प्रीतं कारयितुमुपक्रमते इत्यनुसन्धाय

हृन्नाळीके विभान्तं शिखिरविशशिनां मध्यगे भद्रपीठे
शङ्खचक्रगदांचाभयमपिदधतं पाणिपादैश्चतुर्भिः ।
मालाश्रीवत्सपीताम्बरधरतुलसीहारकेयूरमुख्यैः
भान्तं भूषाविशेषैर्मम हृदि कलये मेघवर्णं रमेशम् ॥

इति पुण्डरीके भगवन्तं ध्यात्वा

मन्त्रैः कल्पितमासनं हिमजलैस्स्नानञ्च दिव्याम्बरं
नानारत्नविभूषितं मृगमदामोदान्वितंचन्दनम् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जातीचम्पककेतकीविकसितं पुष्पञ्च धूपं तथा
दीपंदेवदयानिधे तवकृते सत्कुक्षये कल्प्यताम् ॥

छत्रञ्चामरयोर्युगं व्यजनिकामादर्शनं मर्दलं
भेरीशङ्खमृदङ्गतालघनिकां नृत्तञ्चगीतं तथा ।
साष्टाङ्गं प्रणतोस्म्यहं पदयुगं चेतस्समस्तं मया
सङ्कल्पेन समर्पितं तवकृते सत्कुक्षये कल्प्यताम् ॥
सौवर्णे स्थालिवर्ये मणिगणखचिते गोघृताक्तान्सुपक्वान्
भक्ष्यान् भोज्यांश्च लेह्यान् परममपि हविश्शोप्य-
मन्यन्निधाय ।
नानाशाकैरुपेतं सदधिमधुघृतक्षीरपानीयमिश्रं
ताम्बूलञ्चात्मनेऽस्मिन् प्रतिदिवसमहं मानसं-
कल्पयामि ॥

इत्यभ्यर्च्य

भगवन्पुण्डरीकाक्ष हृद्यागन्तु मया कृतम् ।
आत्मसात्कुरु देवेश बाह्यैस्त्वां सम्यगर्च्चये ॥

इति प्रार्थ्य,

अथ यागसंभारान् संभृत्य प्रक्षाल्यात्मनो दक्षिणपार्श्वे न्यसेत् ॥ 'आपो अस्मा'निति ऋचा जलभाजनं प्रक्षाल्य आत्मनो वामपार्श्वे धान्योपरि-आधारशक्त्यादिपृथिव्यन्तं ध्यात्वा अभ्यर्च्य 'इमं मे गङ्ग' इति ऋचा निधाय 'समुद्रज्येष्ठा' इति मन्त्रेण 'शन्नोदेवी'रिति ऋचा च

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

जलमुत्पूर्य 'अञ्जन्ति त्वे'ति सूक्तेन पुष्पाणि गृहीत्वा 'आयनेत' इति मन्त्रेण प्रक्षिप्य 'अर्वाची सुभगे'ति द्वाभ्यां तुलसीं गृहीत्वा मूलमन्त्रेण निक्षिप्य गायत्र्या कुशं निक्षिप्य यवोऽसीत्यक्षतान्निक्षिप्य श्रीसूक्तेन 'गन्धद्वारा'मिति मन्त्रेण च गन्धान्निक्षिप्य 'ओषधयस्सोमराज्ञी'रिति श्वेतसर्षपान्निक्षिप्य 'काण्डात्काण्डादि'ति दूर्वाग्राणि सहि'रत्नानी'ति रत्नानि, 'हिरण्यरूपस्सहिरण्यसदृक्' इति ऋचा हिरण्यं च निक्षिपेत्। ततस्तुलस्या मूलमन्त्रेणाभ्यर्च्य धूपं दत्वा 'विश्वानि न' इति दीपं दद्यात्। वायुबीजेन विशोध्य वह्निबीजेन दग्ध्वा अमृतबीजेन दिव्यामृततोयमुत्पाद्य हुंकारेण प्रवुद्धानि कृत्वा फट् कारेणाभिमुखानि कृत्वाऽभिमन्त्र्यास्त्रमन्त्रेण रक्षां कृत्वा 'आपो वा इदं', इमं मे गङ्गे, 'गङ्गे च यमुने चै'वेति मन्त्रैरभिमन्त्र्य अमृते अमृताह्वये अमृतोद्भवेऽमृतप्रदायिनि अमृतं स्रावय स्रावय अमृतप्रदायिनि स्वाहा इत्यमृतमन्त्रेण "स्रीं सुरभ्यै नमः" इति सुरभिमन्त्रेण च सुरभिमुद्रां प्रदर्श्य अन्यानि पूजाद्रव्याणि दक्षिणपार्श्वे निहितानि शोषणदहनप्लावनादिभिर्विशोध्य देवस्यात्मनो वा पुरतः पीठे क्रमेण भगवतः पार्श्वादाग्नेयादिषु कोणेषु अर्घ्यपाद्याचमनीयपात्राणि मध्ये शुद्धोदकपात्रञ्च निधाय विष्णुगायत्र्या अस्त्रमन्त्रेण च प्रक्षाल्य पूर्ववच्छोषण-दहन प्लावनानि कृत्वा तुलसीं तिलगन्धपुष्पाणि च हृदयमन्त्रेण निधाय कुम्भस्थतोयेन वेदादिमन्त्रैर्हृदयमन्त्रेण च तानि पूरयित्वा मूलमन्त्रेणा-भिमन्त्र्य अर्घ्यपात्रे गन्धपुष्पकुशाग्राक्षतफलतिलसिद्धार्थान्निक्षिप्य पाद्यपात्रे दूर्वां विष्णुपर्णीं श्यामाकं पद्मं तिलमक्षतञ्च निक्षिप्य आचमनीयपात्रे एलालवङ्गतक्कोलकर्पूरचन्दनलामज्जाजातिपुष्पाणि निक्षिप्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्नानीयपात्रे कोष्ठमासिहरिद्राद्वयमुराशैलेयचम्पकवचाकच्चोलमुस्ता इति सर्वौषधीः गन्धरत्नफलबीजकुशतिलाक्षत दधिक्षीरघृतानि च निक्षिप्य सर्वत्र पूर्ववच्छोषणदहनप्लावनानि कृत्वा सुरभिमुद्रां प्रदर्श्य अर्घ्यपात्रं दक्षिण-पाणिनास्पृशन् पवित्रमूलमन्त्राभ्यामभिमन्त्र्य ओं नमो भगवते इत्यर्घ्यं परिकल्पयेत्। अन्यानि मूलमन्त्रेणाभिमन्त्र्य ओं नमो भगवते पाद्यं परिकल्पयामीति पाद्यं, ओं नमो भगवते आचमनीयं परिकल्पयामीत्याचमनियं, ओं नमो भगवते स्नानीयं परिकल्पयामीति स्नानीयं, ओं नमो भगवते शुद्धोदकं परिकल्पयामीति शुद्धोदकं परिकल्प्य पात्राणि धूपदीपैरभ्यर्च्य, अस्त्र-मन्त्रेण रक्षांकृत्वा तत्तद्द्रव्ययुतान् सर्वानभिषेककलशान् यथावकाशं निधाय द्वादशारचक्रमध्यस्थं भासमानं भास्करं दक्षिणहस्ततले ध्यात्वा तद्रश्मिभिः सर्वाणि पूजाद्रव्याणि अभिषेकद्रव्याणि च दग्धानिभस्मीभूता-निध्यात्वा वामहस्ते षोडशदलयुक्तविकसितपद्मे अमृतमयरश्मिभिः हृदि यन्त्रं चन्द्रं ध्यात्वा तदुत्थितैरमृतांशुभिस्सिक्तानि पुनर्जातानि याग-योग्यानि ध्यात्वा ताभ्यां सर्वाणिपात्राणिस्पृष्ट्वा विष्णुगायत्र्याऽभिमन्त्र्य सुरभिमुद्रां प्रदर्श्य तदुत्थेन अमृतेन पूरितानि विचिन्त्य पञ्चोपनिष-न्मन्त्रेणाभिमन्त्रयेत्। ततो घण्टां पुरतो निधाय परिशोध्य शोषणादीनि कृत्वा पूजयेत्। आदौ द्वादशारञ्चक्रं विचिन्त्य तत्र अरेषु द्वादशात्मानं रविं विचिन्त्य तदुपरि षोडशारं चक्रं विचिन्त्य तत्र षोडशकलात्म-कममृतांशुं चन्द्रमसं विचिन्त्य तेष्वरेषु षोडशस्वराक्षरान् विचिन्त्य तदुपरि चतुर्विंशतिदलपद्मं ध्यात्वा दलेषु ककारादिभकारान्तं चतुर्विंशतिसङ्ख्यं वर्णगणं चतुर्विंशत्तत्त्वसङ्घं च पद्मकिञ्जल्के मकारजीवतत्त्वं

 CC-0. Jangamwadi Math Collection. Digitized by eGangotri

च ध्यात्वा कर्णिकायामीश्वरं ध्यात्वा सर्वेषु वृत्तक्षेत्रेषु नभस्वन्तं ध्यात्वा घण्टाया वदने मुक्ताहाराश्रितं शङ्खं यकारञ्च ध्यात्वा शङ्खे प्रणवं ध्यात्वा पर्वसु सप्तसु रेफादिहकारान्तान् वर्णान् ध्यात्वा तदुपरि पर्वणि अकारे पतत्रिराजं प्राणाधिदैवतं ध्यात्वा घण्टादण्डाश्रितां विद्यां ध्यात्वा घण्टामधोमुखं ब्रह्माण्डं ध्यात्वा कर्णिकामध्ये शब्दब्रह्ममयीं देवीं ध्यायेत् ।

"पद्मे विचिन्तयेद्देवीं वर्गाष्टकभुजान्विताम् ।
मुख्ये हस्तचतुष्केतु लाञ्छनं कमलादिकम् ॥

स्फाटिकञ्चाक्षसूत्रञ्च तथा विज्ञानपुस्तके ।
अक्षयं वरदं चैव धारयन्तीं सितप्रभाम् ॥

पद्मासनेनोपविष्टां पद्मपत्रायतेक्षणाम् ।
पद्मपत्रप्रतीकांशां पद्ममालाविभूषिताम् ॥

सिताभरणसञ्छन्नां पीतवस्त्रविवेष्टिताम् ।
मन्त्रौघमुद्गिरन्तीं च मन्त्रज्वालाप्रभान्विताम् ॥

देवैस्संस्तूयमानां च ब्रह्माद्यैर्ब्रह्मवेदिभिः ।
ऋषिभिर्मुनिभिस्सिद्धैः लोकानुग्रहकारिभिः ॥

नृत्यमानां स्मरेत् सम्यक् पूजाकाले सदैव हि ।

इति ध्यात्वा, अर्घ्यं, गन्ध, पुष्प, धूप, दीपैरभ्यर्च्य, देवस्य आह्वाने अर्घ्य धूप दीपदाने नैवेद्यदाने विष्वक्सेनार्चने पीठार्चने द्वारस्थदेवार्चने

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

बलिप्रदानकाले च घण्टां नादयेत् । धूपपात्रस्य मूले क्ष्मातत्त्वं कमले जलतत्वं चक्रे तेजस्तत्वं किङ्किणीजाले वायुतत्त्वं कर्णिकोपरि गमनतत्वं च ध्यात्वा अर्चयेत् । ततोऽस्त्रमन्त्रेण शंखं प्रक्षाल्य हृदयमन्त्रेण शङ्खे गन्धपुष्पाक्षतान्निक्षिप्य मातृकावर्णं प्रतिलोममुच्चार्य शिरोमन्त्रेण जलेन शङ्खमापूर्य मं वह्निमण्डलाय दशकलात्मने नम इति शंखपीठे समभ्यर्च्य अं सूर्यमण्डलाय द्वादशकलात्मने इति शंखं समभ्यर्च्य उं सोममण्डलाय षोडशकलात्मने नम इति शंखस्थजले समभ्यर्च्य "गङ्गे च यमुने चैवे"ति तीर्थमन्त्रेण तीर्थं आदित्यमण्डलात् शङ्खे समावाह्य पुनः हृदयकमलाद्विष्णुं मूलमन्त्रेण तस्मिन् जले समावाह्य

"कनिष्ठाङ्गुष्ठकौसक्तौ करयोरितरेतरम् ।
तर्जनी मध्यमा नामाः संहता भुग्नवर्जिताः ॥
'मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता' ।

इत्युक्तप्रकारेण गालिनीमुद्रां शिखामन्त्रेण तस्मिम् जले प्रदर्श्य नेत्रमन्त्रेण तज्जलं संवीक्ष्य कवचमन्त्रेण तत्तीर्थं अधोमुखेन गृहीत्वा तर्जनीद्वयेन हस्तद्वयेन परितोभ्रमणं, अवकुण्ठनमुद्रया समवकुण्ठ्य तत्तीर्थस्थदेवतां तत्तन्मूल-मन्त्रव्यापकेन सकलीकृत्य मूलमन्त्रस्याङ्गैरङ्गन्यासं कृत्वा अस्त्रमन्त्रेण दश-दिग्बन्धनं कृत्वा क्षतादियुतं अच्युतस्वरूपीकृतं तज्जलं स्पृशन् मूलमन्त्रमष्टवारं जपित्वा तज्जलं किञ्चिदुपस्थितवर्धनीपात्रे क्षिप्त्वाऽवशिष्टेन निजतनुं संप्रोक्ष्य पुनरप्यवशिष्टेन तीर्थजलेन त्रिवारं मूलमन्त्रमुच्चरन् गन्धकुसुमादीन् संप्रोक्षयेत् । तत उद्धरिण्या अर्घ्यजलमादाय तत्र पुष्पद्वयं निक्षिप्य तत्पात्रं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वामहस्ते निधाय दक्षिणहस्तेन पिधाय घ्राणसममुद्धृत्य मूलमन्त्रेण सप्तकृत्वोऽभिमन्त्र्य "ओं नमो भगवत्यै विरजायै" इति विरजामवाह्य अर्घ्यादिपात्रेषु कुम्भे च किञ्चित्प्रक्षिप्य शेषेण भगवद्विग्रहं यागभूमिं पूजाद्रव्याणि स्वात्मानञ्च मूलमन्त्रेण अस्त्रमन्त्रेण च प्रत्येकं संप्रोक्ष्य आसनं परिकल्पयेत् ।

ओं आधारशक्त्यै नमः, ओं प्रकृत्यै नमः, ओं अखिलजगदाधारायकूर्मरूपिणे नारायणाय नमः, ओं भगवते अनन्ताय नागराजाय नमः ओं भूं भूम्यै नमः, इति यथास्थानं ध्यात्वा प्रणम्य ओं श्री वैकुण्ठाय दिव्यलोकाय नमः, ओं श्री वैकुण्ठाय दिव्यजनपदाय नमः, ओं श्रीवैकुण्ठाय दिव्यनगराय नमः, ओं श्री वैकुण्ठाय दिव्यविमानाय नमः, ओं आनन्दमयाय दिव्यमण्टपरत्नाय नमः, इति दिव्यलोक दिव्यजनपद नगरविमानमण्टपरत्नानि प्रणम्य अस्मिन् ओं अनन्तायास्तरणाय नमः, इति आस्तरणं प्रणम्य आग्नेयादिकोणेषु ओं धर्माय पीठपादाय नमः, ओं ज्ञानाय पीठपादाय नमः, ओं वैराग्याय पीठपादाय नमः, ओं ऐश्वर्याय पीठपादाय नमः । प्रागादि दिक्षु ओं अधर्माय पीठगात्राय नमः अज्ञानाय पीठगात्राय नमः अवैराग्याय पीठगात्राय नमः, अनैश्वर्याय पीठगात्राय नमः एभिः परिच्छिन्नतनुं पीठभूतं सदात्मकं अनन्तं ध्यायामीति प्रणम्य प्रागीशानदिगन्तरे ऋग्वेदाय नमः । प्राग्वह्नि-दिगन्तरे यजुर्वेदाय नमः । वारुणनैऋतिदिगन्तरे सामवेदाय नमः । वारुणानिलदिगन्तरे अथर्वणवेदाय नमः । ईशानसोम दिगन्तरे कृतयुगाय नमः । याम्यानलदिगन्तरे त्रेतायुगाय नमः । यातुधानयाम्य दिगन्तरे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

द्वापरयुगाय नमः । सोमवायुदिगन्रे कलियुगाय नमः । एतेषां षोडशानामुपरि कालचक्राय नमः । ओमनन्ताय नमः । भगवतः पश्चाद्भागे सर्वकार्योन्मुखं विभुमनन्तं ध्यायामीत्यनन्तं प्रणम्य पीठस्योपरिमध्ये ओं गुणत्रयसमन्विता-व्यक्तस्वरूपाय अष्टदलपद्माय नमः । इति पद्मं ध्यात्वा दलेषु ओं सूर्यमण्डलाय नम इति ध्यात्वा केसरेषु ओं सोममण्डलाय नमः इति ध्यात्वा कर्णिकायां ओं वह्निमण्डलाय नमः इति ध्यात्वा प्रागादि दलेषु ओं विमलायै नमः । ओं उत्कर्षिण्यै नमः । ओं ज्ञानायै नमः ओं क्रियायै नमः । ओं योगायै नमः । ओं प्रभ्व्यै नमः । ओं सत्यायै नमः । ओं ईशानायै नमः । इत्यष्टशक्तीश्चामरहस्ताः ध्यात्वा कर्णिकापूर्वभागे ओमनुग्रहायै नमः इत्यनुग्रहां चामरहस्तां ध्यात्वा । ओं जगत्प्रकृतये योगपीठाय नमः इति कर्णिकायां योगपीठं ध्यात्वा ओं दिव्ययोगपर्यङ्काय नम इति तस्मिन् दिव्य-योगपर्यङ्कं ध्यात्वा ओं सहस्रशीर्षाय अनन्ताय नागराजाय नम इत्यनन्तं नागराजं ध्यात्वा ओमनन्ताय नम इति पुरतः पादपीठं ध्यात्वा सर्वाण्या-धारशक्त्यादीनि पादपीठान्तानि तत्त्वानि गन्धपुष्पधूपदीपैः संपूज्य अनन्त-गरुडविष्वक्सेनानां सपीठकेभ्यः पद्मासनेभ्यो नम इति तत्तत्स्थाने सपीठकानि पद्मासनानि परिकल्प्य सर्वपरिवाराणां तत्तत्स्थाने पद्मेभ्यो नम इति पद्मासनानि परिकल्प्य सर्वतः पुष्पाक्षतानि विकीर्य सर्वार्थं जलमुद्धरिण्याऽऽदायघ्राणसमुद्धृत्य असद्गुरुभ्यो नमः । असत्परम-गुरुभ्यो नमः अस्मत्सर्वगुरुभ्यो नमः इति चतुरावृत्य ओं भगवते आग-च्छागच्छेति भगवत्पादसमीपाद्योगपीठस्य पश्चिमोत्तरदिग्भागे स्वगुरूना-वाह्य व्यापकन्यासं कृत्वा अर्घ्यगन्धपुष्पधूपदीपैरभ्यर्च्य, प्रणम्य,

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"गुरवस्तदीयगुरवो दिशन्तु मम साध्वनुग्रहम् ।
युष्मदुपजनितशक्तिमतिर्हरिमर्चयामि गतभीः प्रसीदत ॥

इत्यनुज्ञाप्य भगवद्यागमारभेत ।

मन्त्रयोगस्समाह्वानं करपुष्पोपदर्शनम् ।
बिम्बोपवेशनं चैव योगविग्रहचिन्तनम् ॥

प्रणामश्च समुत्थानं स्वागतं पुष्पमेव च ।
सान्निध्य याचनञ्चेति तत्राह्वानस्य सत्क्रिया ॥

इत्युक्तप्रकारेणावाहनं कुर्यात् । यथा, तिष्ठन् उद्धरिण्या अर्घ्यजलमादाय तत्रपुष्पद्वयं निक्षिप्य धारणविधारणे कृत्वा हृदयसमुद्धृत्य मूलमन्त्रं चतुरावृत्य ओं भगवन्नागच्छागछेत्युक्त्वा ओं पूर्विकाः व्यस्तास्समस्ताश्च व्याहृतीरुक्त्वा वेदादीनुक्त्वा कल्पिते नागभोगे समासीनं भगवन्तं नारायणं पुण्डरीकदलामलाक्षं किरीटकेयूरहारमकुटकटकादि सर्वभूषणभूषित माकुञ्चितदक्षिणपादं प्रसारितवामपादं जानुन्यस्तदक्षिणभुजं नागभोगे विन्यस्तवामभुजं ऊर्ध्वभुजद्वयेन शङ्खचक्रधरं सर्वेषां सृष्टिस्थितिप्रलयहेतु-भूतमञ्जनाभं, विराजमानं, चकासतं, उदग्र, प्रबुद्ध, स्फुरदपूर्वाचिन्त्यपरम-सत्वपंचशक्तिमयविग्रहं ध्यायामीति ध्यात्वा, 'सव्यं पादं प्रसार्ये'ति श्लोकमुक्त्वा "भगवन्नारायणाभिमुखोभवे"ति मूलमन्त्रेण प्रार्थयेत् । इति मन्त्रयोगः । ओं परमधामावस्थित मदनुग्रहाभिमत योगाद्यवतार एह्येहि-ह्यभिमतसिद्धिमन्त्रशरीरे । ओं नमो नमः । ओं षौं नमः पराय परमेष्ठ्यात्मने वासुदेवाय नमः इत्युद्योगं ध्यात्वा मूलमन्त्रेण ब्रह्मरन्ध्रेण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वात्मनि प्रविष्टं ध्यात्वा ओं यां नमः पराय पुरुषात्मने सङ्कर्षणाय नम इति दक्षिणनासया निर्गमय्य हस्तपात्रजले प्रवेशं ध्यायेत् । इदमेव समाह्वानम् । ओं रां नमः पराय विश्वात्मने प्रद्युम्नाय नम इति पात्रं बिम्बस्य मुखे दर्शयित्वा पुरतस्स्थाप्य एकं पुष्पं सजलं सतेजोहस्तेनादाय देवस्य दर्शयेत् । एतत्करपुष्पोपदर्शनम् ।

इज्याकालस्तृतीयोऽयं अह्नोंशस्ससमुपस्थितः ।
संभृताश्चैव संभाराः कल्पितान्यासनानि च ॥

आयातु भगवान्देवः सर्वसम्पत्करः प्रभुः ।
अच्युतो मदनुग्रहार्चायां मदनुग्रहकाम्यया ॥

आवहयामि लक्ष्मीशं परमात्मानमव्ययम् ।
आतिष्ठतामिमां मूर्तिं मदनुग्रहकाम्यया ॥

श्रिया सार्धं जगन्नाथो देव्या नारायणःप्रभुः ।

ओं वां नमः पराय निवृत्यात्मने अनिरुद्धाय नम इति भगवन्मूर्धप्रभृति-पादान्तं पुष्पाञ्जलाभ्यामभिषिच्य बिम्बेप्रवेशं भावयेत् । एतत्बिम्बोपवेशनम् ॥ अन्यत्पुष्पमादाय ओं लां नमः पराय सर्वात्मने नारायणाय नम इत्युक्त्वा प्रणवेन ब्रह्मरन्ध्रं पिधाय शेषं प्रक्षिप्य सङ्कलीकरणन्यासं मूलमन्त्रेण व्यापक न्यासं द्वादशाङ्गन्यासं च कुर्यात् । इति योगविग्रहचिन्तनम् ॥ मूलमन्त्रेण प्रणामोत्थाने कुर्यात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

"ब्रह्माद्यास्सकला देवा यन्नःस्मतुमपीश्वराः
स एष भगवानद्य मम प्रत्यक्षतां गतः।
स्वागतं भगवन्नद्य मां तारयितुमागतः।
धन्योऽस्म्यनुगृहोतोऽस्मि कृतार्थोऽस्मि कृपानिधे ॥

इति भगवते स्वागतं निवेदयेत्। मूलमन्त्रेण भगवत्पादयोः पुष्पप्रदानं कुर्यात्। ओं ज्ञानाय हृदयाय नमः। सन्निधत्स्व भगवन्निति भगवन्मूर्धिन् अर्ध्यजलं पुष्पेण प्रदाय शेषं निरस्य ओं नां बलाय कवचाय हुम्। सन्नि-धत्स्व भगवन्निति पुष्पेणार्घ्यजलं भगवन्मूर्धिन् प्रदाय शेषं निरस्य ओं यं तेजसे नेत्राभ्यां वौषट्। ओं भगवन् यावदाराधनसमाप्ति सान्निध्यं भजस्व इति पुष्पेणार्घ्यजलं भगवन्मूर्धिन् प्रदाय शेषं निरस्येत्। एवमावाहनाङ्ग मुख्यार्घ्यत्रयं प्रदाय –

"सान्निध्यं कुरुदेवेश सर्वदा सर्वकामद।
सर्वमन्त्रकियाभक्ति श्रद्धाहानि सहप्रभो ॥

श्रीभूनीलासमेतस्त्वं वनमालाविभूषणैः।
श्रीवत्सकौत्तुभोरस्कं कृपांकुरु मयिप्रभो ॥

भगवन् यवदाराधनसमाप्ति सान्निध्यं भजस्वेति सान्निध्ययाचनं कुर्यात्। इति भगवन्तमावाह्य

ओं श्रीं श्रियै नम इति भगवद्दक्षिणवक्षसि श्रियं ध्यात्वा ओं भूं भूम्यै नमः ओं नीं नीलायै नमः इति वामवक्षसि भूमिं नीलां च ध्यत्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भगवच्छिरोनासाग्रहृदयगुह्यपादेषु पञ्चोपनिषन्मन्त्रान्विन्यस्य प्रणवसंपुटितमूलमन्त्राक्षराणां स्थितिन्यासं कृत्वा ओं पद्माय नमः। ओं गदायै नमः। ओं सुदर्शनाय नमः। ओं पाञ्चजन्याय नमः। इति तत्तत्स्थानेषु विन्यस्य ओं किरीटाय नमः। ओं श्रीवत्साय नमः। ओं कौस्तुभाय नमः। ओं वनमालायै नमः। इति शिरो वक्षो दक्षिणभागमध्योभयपार्श्वेषु विन्यस्य ओं श्रियै नमः। ओं पुष्ट्यै नमः। ओं सरस्वत्यै नमः। ओं निद्रायै नमः। ओं कान्त्यै नमः। ओं पृथिव्यै नमः। ओं वैनतेयाय नमः। इति तत्तत्स्थानेषु विन्यस्य एवं न्यस्तानां गन्धपुष्पधूपदीपैरभ्यर्च्य नमः कृत्वा

"आवाहिनी स्थापिनी च सन्निधिस्सन्निरोधिनी।
सम्मुखञ्चावकुण्ठं च पाशाङ्कुशगरुत्मताम्॥

प्रार्थनायोनिमुद्रा च महामुद्रा तथैव च।
मूलमुद्राच तत्रैव दर्शयेत्तास्त्रयोदश॥

इत्युक्तप्रकारेण मुद्रां दर्शयेत्। हस्ताभ्यामञ्जलिं कृत्वा अनामिकामूलपर्वणोरङ्गुष्ठौ निक्षिपेत्। इयमावाहिनी मुद्रा। इयमधोमुखी चेत् स्थापिनी मुद्रा। उच्छ्रिताङ्गुष्ठमुष्ट्योः संयोगः सन्निधापिनी। अन्तःप्रवेशिताङ्गुष्ठमुष्ट्योः संयोगः सन्निरोधिनी। मुष्टिद्वयस्थिताङ्गुष्ठौ परस्परं सम्मुखौ संश्लिष्टावुच्छ्रितौ करौ कुर्यात्। इयं संमुखी मुद्रा। प्रसृताङ्गुलिकौ मिथश्श्लिष्टौ सम्मितौ हस्तौ स्वहृदये कुर्यात्। सेयं प्रार्थनामुद्रा। इति षण्मुद्राः प्रदर्श्य, आवाहितो भव, स्थापितो भव, सन्निहितो भव, सन्निरुद्धो भव, संमुखो भव, प्रार्थिताभीष्टप्रदो भव, इति ध्यात्वा,


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कनिष्ठके मिथो बद्ध्वा अनामिके तर्जनीभ्यां बद्ध्वा ऊर्ध्वगयोश्शिष्टयो-र्दीर्घयोर्मध्यमयोरङ्गुल्योरधः अङ्गुष्ठाग्रद्वयं न्यसेत्। सेयं योनिमुद्रा। हस्तौ विमुखौ कृत्वा कनिष्ठिके ग्रथयित्वा तर्जन्यौ शिष्टे कृत्वा तुण्ड-वद्ध्यात्वा अङ्गुष्ठौ प्रलंबौ पादौ ध्यात्वा द्वे चञ्चले मध्यमानामिके द्वौ पक्षौ भावयेत्। एषा गरुडमुद्रा। वाममुष्टेर्मध्यमां दक्षिणमुष्टिगृहीतां कृत्वा तर्जनीं प्रसारितां कुर्यात्। सेयमङ्कुशमुद्रा। वाममुष्टिस्थ तर्जन्या दक्षिणमुष्टिस्थतर्जनीं संयोज्य अङ्गुष्ठाग्राभ्यां सव्यतर्जनीं स्पृशेत्। सैषा पाशमुद्रा। अधोमुखेन गृहीततर्जनीद्वयेन हस्तद्वयेन परितो भ्रमणं अवकुण्ठनमुद्रा। सम्मुखौ सुश्लिष्टौ सुप्रसारितौ करौ कृत्वा मध्यमाङ्गुल्योः पृष्ठे मूलतो विपर्यस्तेऽनामिके तर्जनीमूलयोर्न्यस्य तर्जनीभ्यामनामिकाग्रे-निगृह्य मध्यमयोरग्रे श्लेषयित्वा अन्योन्यं पृष्ठतोलग्नं तलमध्ये उन्नतं कनिष्ठायुगलं कृत्वा अङ्गुष्ठाग्रद्वयं मध्यमयोरग्रपर्वगंकुर्यात्। सैषा महायोनि मुद्रा। इयमेव महामुद्रेति च उच्यते। पूज्य तत्तद्देवता मुद्रा मूलमुद्रेत्युच्यते। हृदये शिरसि चोर्ध्वगः संपुटाञ्जलिः प्रमाणमुद्रेत्युच्यते। एषैव वासुदेवादि चतुर्विंशतिमूर्तीनां मीनादिमूर्तीनां अन्यासां भगवन्मूर्तीनां मुद्रेत्युच्यते। भगवदाराधने एता मुद्राः प्रदर्शयेत्।

ततः श्रियमावाहयेत्। यथा, उद्धरिण्या अर्घ्यजलमादाय तत्र पुष्पद्वयंनिक्षिप्य धारणविधाने हृदयसमुद्धृत्य 'ओं श्रीं श्रियै नमः' इति मूलमन्त्रं चतुरावृत्य भगवति आगच्छ आगच्छ इति भगवतो वक्षस्थलात् भगवद्दक्षिणपार्श्वे श्रियमावाहयामि 'ओं भूः श्रियमावाहयामि' इत्येवं ओं पूर्विका व्यस्तास्समस्ताश्च व्याहृतीरुक्त्वा 'हिरण्यवर्णां हरिणी'

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मित्यादि 'पद्मवर्णां तामिहोपह्वयेश्रिय'मित्यन्तमुक्त्वा गन्धद्वारामित्यृचं चोक्त्वा श्रियमावाह्य च,

पार्श्वे दक्षिणतो विष्णोः देवीं कमललोचनां
तरुणीं सुकुमाराङ्गीं सर्वलक्षणशोभिताम् ।
दुकूलवस्त्रसंवीतां सर्वाभरणभूषिताम्
तप्तकाञ्चनसंकाशां पीनोन्नतपयोधराम् ॥

रत्नकुण्डलसंयुक्तां नीलकुन्तलशीर्षजाम् ।
दिव्यचन्दनलिप्ताङ्गीं दिव्यपुष्पावतंसकाम् ॥

स्मितवक्त्रां श्रियं देवीं चिन्तयेऽभीष्टदां सदा ।

इति विग्रहध्यानं कृत्वा, ओं परमधामावस्थिते मदनुग्रहाभिमतयोगोद्यतावतारे एह्येहि अभिमतसिद्धिदमन्त्रशरीरे ओं नमो नमः ओं श्रीं श्रियै नम इत्युद्योगं ध्यात्वा ओंश्रीं श्रियै नम इति ब्रह्मरन्ध्रेण स्वात्मनि प्रविष्टां ध्यात्वा ओं श्रीं श्रियै नम इति पुनः दक्षिणनासया निर्गमय्य पात्रप्रवेशं भावयित्वा ओं श्रीं श्रियै नम इति पात्रं बिम्बस्य मुखे दर्शयित्वा पुरतःस्थाप्य एकं पुष्पं सजलं सतेजोहस्तेनादाय देव्या दर्शयित्वा ओं श्रीं श्रियै नम इति मूर्धप्रभृतिपादान्तं पुष्पजलाभ्यामभिषिच्य पात्रात्बिम्बे प्रवेशं भावयित्वा पुष्पं निरस्य अन्यत्पुष्पमादाय 'ओं श्रीं श्रियै नमः' इति ब्रह्मरन्ध्रं पिधाय शेषं प्रक्षिप्य सङ्कलीकरणन्यासं पञ्चोपनिषन्यासं मूलमन्त्रेणव्यापकन्यासं द्वादशाङ्गन्यासं च कृत्वा 'ओं श्रीं श्रियै नमः' इति प्रणामोत्थाने कृत्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वागतं निवेदयित्वा 'ओं श्रीं श्रियै नम' इति पादयोः पुष्पाञ्जलिं दत्वा 'ओं ज्ञानाय हृदयाय नम' इति सन्निधत्स्व भगवतीत्यादिना मुख्यार्घ्यत्रयं दत्वा भगवति ! 'यावदाराधनपरिसमाप्ति सान्निध्यं भजस्वे'ति सान्निध्य याचनं कृत्वा आवाहिन्यादित्रयोदशमुद्रां दर्शयेत् ।

करौ संहतौ सम्मुखौ उन्नताङ्गुलीकृत्वा अङ्गुष्ठौ तावन्तः प्रवेश्य मिलितौ कुर्यात् । एषा पद्ममुद्रा । सर्वासां श्र्यादिदेवीनामिति मूलमुद्रां दर्शयित्वा 'ओं श्रां ज्ञानाय हृदयाय नमः । 'ओं श्रीं ऐश्वर्यायशिरासे स्वाहा' । ओं श्रूं शक्त्यै शिखायैवौषट् । ओं श्रैं बलायकवचायहुम् । ओं श्रौं तेजसे नेत्राभ्यांवौषट् । ओं श्रः वीर्यायास्त्राय फट् । इति श्रियः तत्तत्स्थानेषु विन्यस्य, एवं 'भूं भूम्यै नमः' 'ओं नीं नीलायै नमः' इति मन्त्रद्वयेन भूमिं नीलाञ्चतत्तत्स्थाने आवाह्य पद्ममुद्रां दर्शयित्वा ओं भां ज्ञानाय हृदयाय नमः । ओं भीं ऐश्वर्यायशिरासे स्वाहा । ओं भूं शक्त्यै शिखायै वौषट् । ओं भैं बलायकवचायहुम् । ओं भौं तेजसे नेत्राभ्यां वौषट् । ओं भः वीर्यायास्त्राय फट् । इति भूम्याः तत्तत्स्थानेषु विन्यस्य, ओं नां ज्ञानायहृदयाय नमः । ओं नीं ऐश्वर्याय शिरसे स्वाहा । ओं नूं शक्त्यै शिखायै वौषट् । ओं नैं बलाय कवचायहुम् । ओं नौं तेजसे नेत्राभ्यां वौषट् । ओं नः वीर्यायास्त्राय फट् । इति नीळायाः तत्तत्स्थानेषु विन्यसेत् ।

ओं किरीटाय मकुटाधिपतये नम इत्युपरि भगवतः पश्चिमपार्श्वे चतुर्भुजं चतुर्वक्त्रं कृताञ्जलिपुटं मूर्ध्नि भगवत्किरीटधरं किरीटाख्यं दिव्यभूषणं प्रणम्य, एवमेव 'ओं किरीटमालायै आपीडात्मने नमः' इत्यापीडकं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

तथैव पुरतः प्रणम्य, 'ओं दक्षिणकुण्डलाय मकरात्मने नम' इति दक्षिण-कुण्डलं दक्षिणतः प्रणम्य, 'ओं वामकुण्डलाय मकरात्मने नम' इति वाम-कुण्डलं वामतः प्रणम्य, 'ओं वैजयन्त्यै वनमालायै नम' इति वैजयन्तीं पुरतः प्रणम्य, 'ओं श्रीमत्तुलस्यै नम' इति तुलसीदेवीं पुरतः प्रणम्य ओं हाराय सर्वाभरणाधिपतये नम इति हारात्मानं पुरतः प्रणम्य ओं श्रीवत्साय श्रीनिवासाय नम इति श्रीवत्सं पुरतः प्रणम्य 'ओं श्रीकौस्तुभाय सर्वरत्नाधिपतये नम' इति कौस्तुभं रत्नाधिपतिं पुरतः प्रणम्य, 'ओं काञ्चीगुणोज्वलाय दिव्यपीताम्बराय नम' इति पीताम्बरं पुरतः प्रणम्य 'ओं सर्वेभ्यो भगवद्दिव्यभूषणेभ्यो नम' इति सर्व भूषणानि पुरतः प्रणम्य 'ओं श्रीसुदर्शनाय हेतिराजाय नम' इति सुदर्शनात्मानं रक्तवर्णं रक्तनेत्रं द्विभुजं कृताञ्जलिपुटं भगवन्तमालोकयन्तं तद्दर्शनानन्दोपबृंहितमुखं भगवच्चक्रं मूर्ध्नि धारयन्तं दक्षिणतः प्रणम्य 'ओं नन्दकाय खड्गाधिपतये नम" इति नन्दकात्मानं शिरसि खङ्गं धारयन्तं तथैव प्रणम्य तथैव 'ओं पद्माय नम' इति पद्मात्मानं शिरसि पद्मं धारयन्तं प्रणम्य 'ओं पाञ्चजन्याय शङ्खाधिपतये नम' इति शङ्खात्मानं सितवर्णं रक्तनेत्रं द्विभुजं कृताञ्जलिपुटं शिरसि शङ्खं धारयन्तं वामतः प्रणम्य, तथैव 'ओं कौमोदक्यै गदाधिपत्न्यै नम,' इति गदादेवीं प्रणम्य तथैव 'ओं शार्ङ्गाय चापाधिपतये नम' इति शार्ङ्गात्मानं प्रणम्य, तथैव 'ओं सर्वेभ्यो भगवद्दिव्यायुधेभ्यो नम' इति सर्वाणि भगवदायुधानि परितः प्रणम्य, 'ओं सर्वाभ्यो भगवत्पादारविन्द-संवाहिनीभ्यो नम' इति दिव्यपादारविन्द संवाहिनीः समन्ततः प्रणम्य 'ओं अनन्ताय नागराजाय नम' इति पृष्ठतोऽनन्तं भगवन्तं चतुर्भुजं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

हलमुसलधरं कृताञ्जलिपुटं फणामणिसहस्रमण्डितोत्तमाङ्गं भगवद्दर्शनानन्दोपबृंहितसर्वाङ्गं ध्यात्वा प्रणम्य, 'ओं सर्वेभ्यो भगवत्परिजनेभ्यो नम' इति असंख्येयपरिजनान् समन्ततः प्रणम्य, 'ओं भगवत्पादुकाभ्यां नम' इति पादुके पुरतः प्रणम्य 'ओ सर्वेभ्यो भगवत्परिच्छदेभ्यो नम' इति परिच्छदान् समन्ततः प्रणम्य 'ओं वैं वैनतेयायनम' इत्यग्रतो भगवन्तं वैनतेयमासीनं द्विभुजं कृताञ्जलिपुटं ध्यात्वा प्रणम्य, 'सत्याय नमः। विहगेशाय नमः। तार्क्ष्याय नमः। सुवर्णाय नमः। गरुडाय नमः' इति वैनतेयस्य पञ्चमूर्तिं ध्यात्वा प्रणम्य 'ओं विष्वक्सेनाय नम' इति भगवतः प्रागुत्तरे पार्श्वे दक्षिणाभिमुखं भगवन्तमासीनं विष्वक्सेनं चतुर्भुजं शङ्खचक्रधरं कृताञ्जलिपुटं नीलमेघनिभं ध्यात्वा प्रणम्य 'ओं गं गजाननाय नमः' 'ओं जं जयत्सेनाय नमः' 'ओं हं हरिवक्त्राय नमः' 'ओं कं कालप्रकृतिसंज्ञिकाय नमः 'ओं सर्वेभ्यो भगवद्विष्वक्सेनपरिजनेभ्यो नम' इति श्रीमद्विष्वक्सेनपरिजनान् प्रणम्य, 'ओं चण्डाय द्वारपालाय नमः'। 'ओं प्रचण्डाय द्वारपालाय नम' इति पूर्वद्वारपार्श्वयोः प्रणम्य 'ओं भद्राय द्वारपालाय नमः'। ओं सुभद्राय द्वारपालाय नम' इति दक्षिणद्वारपार्श्वयोः प्रणम्य, 'ओं जयाय द्वारपालाय नमः। 'ओं विजयायद्वारपालाय नम' इति पश्चिमद्वारपर्श्वयोः प्रणम्य, 'ओं धात्रे द्वारपालाय नमः', 'ओं विधात्रे द्वारपालाय नमः' इत्युत्तरद्वारपर्श्वयोः प्रणम्य, सर्वानेतान् द्वारपालान् शङ्खचक्रगदाधरान् आज्ञामुद्राधरान् ध्यायामीति ध्यात्वा ओं सर्वेभ्यो भगवद्द्वारपालेभ्यो नमः' इति सर्वद्वारेषु सर्वान् द्वारपालान् प्रणम्य, ओं कुमुदायगणाधिपतये सवाहनपरिवारप्रहरणाय नमः', इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पूर्वस्यां दिशि पार्षदेश्वरं कुमुदं प्रणम्य,' 'ओं कुमुदाक्षायगणाधिपतये सवाहनपरिवारप्रहरणाय नमः' इति 'आग्नेय्यां दिशि कुमुदाक्षं प्रणम्य' ओं 'पुण्डरीकाय गणाधिपतये सवाहनपरिवारप्रहणाय नमः इति दक्षिणस्यां पुण्डरीकं प्रणम्य, ओं वामनाय गणाधिपतये सवाहन परिवारप्रहरणाय नमः इति नैरृत्यां वामनं प्रणम्य, ओं शङ्कुकर्णाय गणाधिपतये सवाहनपरिवारप्रहरणाय नमः इति पश्चमायां शङ्कुकर्णं प्रणम्य, ओं सर्व नेत्राय गणाधिपतये सवाहनपरिवारप्रहरणाय नमः इति वायव्यां सर्वनेत्रं प्रणम्य, ओं सुमुखाय गणाधिपतये सवाहनपरिवार प्रहरणाय नमः इत्युत्तरस्यां सुमुखं प्रणम्य, ओं सुप्रतिष्ठिताय गणाधिपतये सवाहनपरिवारप्रहणाय नमः इति ईशान्यां सुप्रतिष्ठितं प्रणम्य, ओं सर्वेभ्यो भगवत्पारिषदेभ्यो नमः इति सर्वस्माद्बहिस्सर्वान् पारिषदान् प्रणमेत् ।

एवं परमव्योम क्षीरार्णवादित्यमण्डलहृद्दयेभ्यः, मथुराद्वारका-ऽयोध्यादिभ्यः दिव्यावतारस्थानेभ्यः अन्येभ्यः पौराणिकेभ्यः श्रीरङ्गादिभ्यः स्थानेभ्यश्च यथारुचि भगवन्तं नारायणमावाह्य देवीभूषायुधपरिजन-परिच्छदं द्वारपालपार्षदैस्सेव्यमानं स्वाधीनत्रिविधचेतनाचेतनस्वरूप-स्थितिप्रवृत्तिभेदं स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यवीर्यशक्तितेजः प्रभृत्यसंख्येयकल्याणगुणगणौघमहार्णवं भगवन्तं श्रीमन्नारायणं ध्याया-मीतिध्यात्वा प्रणम्य मूलमन्त्रेण स्वात्मानं देवाय निवेद्य प्रणम्यानुज्ञाप्य भगवत्पूजामारभेत ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'इज्याकालस्तृतीयोऽयमन्ह्रोंशस्समुपागतः ।
संभृताश्चैव संभाराः कल्पितान्यासनानि च ॥

स्नानाद्यर्थानि देवेश तवेच्छावर्तते यदि ।
अवलोकनदानेन तत्सर्वंसफलं कुरु ॥

तदर्थं सहदेवीभ्यां सानुगैस्सचिवैस्सह ।
मदनुग्रहाय कृपया अत्रागन्तुं त्वमर्हसि' ॥

इति याग प्रार्थनां कृत्वा

'यावदाद्यासनं मन्त्रासनान्तं पूज्यते मया ।
तावत्सान्निध्यमत्रैव कुरुष्व पुरुषोत्तम ॥

इत्यनुसन्धाय "ओं भगवन् त्वदाराधनमनुंजानीहीत्यनुज्ञाप्य पुण्डरीकाक्ष-विद्यया भगवन्तं संमुखीकृत्य सर्वार्थजलमादाय वेदादीन् मूलमन्त्रं चोक्त्वा 'भगवन्निदमासनं प्रतिगृह्णीष्वे'ति आसनार्थं पुष्पाञ्जलिं प्रक्षिप्य मूलमन्त्रेण पादपीठं दत्वा "अर्चत प्रार्चते"ति साम्ना पुष्पाञ्जलिं प्रक्षिप्य

"विभो सकललोकेश विष्णोजिष्णो प्रभोहरे ।
त्वां भक्त्यापूजयाग्यद्य भोगैरर्घ्यादिभिः क्रमात्" ॥

इत्यर्घ्यप्रार्थनांकृत्वा पात्रेण पूर्वस्थापितादर्घ्यपात्रात् अर्घ्यजलमादाय पाणिभ्यां घ्राणसमसुद्धृत्य तदभ्यः सावित्र्याऽभिमन्त्र्य भगवम् मत्पूजांप्रतिगृह्णीष्वेति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चिन्तयन् भगवन्मुखे दर्शयित्वा विष्णुगायत्र्या मूलमन्त्रेण च भगवद्दक्षिण-हस्ते किञ्चित्प्रदाय शेषमर्घ्यं प्रतिग्रहपात्रे प्रक्षिपेत्। पुनरुद्धरिण्याऽर्घ्यजल-मादाय ओं भगवन्? अर्घ्येणार्चयिष्यामी"ति सङ्कल्प्य भगवन्? इदमर्घ्यमिति भगवन्मुखे दर्शयित्वा मूलमन्त्रेण प्रदाय हस्तौ प्रक्षाल्य पुष्पाणिदत्वा

"अकृत्रिमप्रेमरसनिर्भरैः स्वकराम्बुजैः।
शुद्धैः स्वभावसुभगैस्सुखस्पर्शैस्सुगन्धिभिः॥

संवाह्यमानमनिशं शेषशेषाशनादिभिः।
असत्यस्यातिनीचस्य भक्तिहीनस्यदुर्मतेः॥

ममापिकरयोरद्य स्वयैवकृपयाहरे।
निधेहि चरणद्वन्द्वं त्वामस्मि शरणं गतः॥

इति पाद्य प्रार्थनां कृत्वा पाद्यपात्राज्जलमादाय भगवन्! इदं पाद्यं प्रतिगृह्णीष्वेत्यनुसन्धाय 'त्रीणि पदे'ति ऋचा मूलमन्त्रेण च पादयेः किञ्चित्प्रदाय मनसा पादौ प्रक्षाळयन् पाद्यं प्रतिग्रहपात्रे प्रक्षिपेत्। पादौ वस्त्रेण संमृज्य मूलमन्त्रेण चन्दनक्षोदवारिभिश्चरणावालिप्य गन्धपुष्पाणिदत्वा आचमनीयपात्रज्जलमादाय् भगवन्! आचमनीयं प्रति-गृह्णीष्वेत्युक्त्वा "आपः पुनन्तु" इत्येतेन मूलमन्त्रेण च भगवद्दक्षिणहस्ते किञ्चित्प्रदाय तत्प्रतिग्रहपात्रे शेषं दद्यात्। ततो वस्त्रेण संमृज्य हस्तौ प्रक्षाल्य पादयोः पुष्पाणि दत्वा मूलमन्त्रेण गन्धपुष्पधूपदीपाचमनानि

 CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दत्वा मूलमन्त्रेण मधुपर्कं आचमनीयं च दत्वा कर्पूरादि मातुलिङ्ग-समुदायरूपमुखवासताम्बूलादीनि दत्वा प्रणम्य,

'अत्मात्मीयञ्च यत्किञ्चित् दुर्भरंदुस्त्यजं मम ।
तत्सर्वं त्वयि विन्यस्तं शुभयोः पादपद्मयोः" ॥

आत्मात्मीयञ्च सर्वं भगवन्नित्यकिङ्करतया स्वीकुर्विति भगवते निवेदयेत् ।

ततः स्नानासनं परिकल्प्य ओं स्नानासनाय नम इति स्नानासनं गन्धपुष्पादिभिरभ्यर्च्यओं पादुकाभ्यां नम इति पादुके गन्धादिभिरभ्यर्च्य भगवन्तं प्रणम्य तत्पादुके करेकृत्वा स्वमूर्धनि अञ्जलिंकृत्वा

'दासोऽहं ते जगन्नाथ सपुत्रादिपरिग्रहः ।
प्रेष्यं प्रशाधि कर्तव्ये मां नियुङ्क्ष्व हि ते सदा ॥

स्नानकालस्त्वयं प्राप्तः तवेच्छावर्तते यदि ।
अभ्यञ्जयित्वा देवेश सुस्नानं कर्तुमर्हसि ॥

स्फुटीकृतं मयादेव इदं स्नानासनं त्वयि ।
सपादपीठं परमं शुभं स्नानासनं महत् ॥

आसादयस्व स्नानार्थं मदनुग्रहकाम्यया ॥ '

इति प्रार्थ्य ओं भगवन् ! इमे पादुके इति पादुके भगवतः पुरतो निधाय ' 'इदं विष्णुः ' 'तीणि पदेति' द्वाभ्यां पादुकारोहणं ध्यात्वा 'उत्तिष्ठ ब्रह्मणस्पत ' इति मन्त्रेण गगवन्तं स्नातुमुत्थाप्य ' भद्रङ्कर्णेभिरितिमन्त्रेण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भगवन्तं स्नानासनं प्रापय्य सावित्र्या मूलमन्त्रेण चार्घ्यं दत्वा 'त्रीणिपदे'ति मन्त्रेण, मूलमन्त्रेण, च पाद्यं दत्वा 'आपः पुनन्त्वि'ति मन्त्रेण, मूलमन्त्रेण च आचमनं दत्वा मूलमन्त्रेण गन्धपुष्पाणि दत्वा एवं श्रियः भूमिर्नीलादि देवीनां तत्तन्मूलमन्त्रशिरस्कैरेतैरेव मन्त्रैः स्नानासनाद्येतावत्पर्यन्तं कृत्वा माल्यभूषणवस्त्राण्यपनीय विष्वक्सेनाय दत्वा मूलमन्त्रेण स्नानशाटिका-मुत्तरीयञ्चप्रदाय मूलमन्त्रेण पाद्याचमनपादपीठप्रदानानि कृत्वा 'तद्विष्णो' रितिमन्त्रेण दन्तधावनकाष्ठं दत्वा मूलमन्त्रेण दन्तपरिशोधनं ध्यात्वा विष्णुगायत्र्या जिह्वानिर्लेखनपट्टिकां दत्वा मूलमन्त्रेण जिह्वानिर्लेखनं ध्यात्वा 'आपो अस्मा'निति वक्त्रकण्डूषं कृत्वा "आप इद्वा उभेषजी'रिति मुखारविन्दप्रक्षालनं कृत्वा 'भद्रातेहस्ता सुकृतोते'ति हस्तप्रक्षालनं कृत्वा 'आपोहिष्ठे'त्याचमनीयं दत्वा मूलमन्त्रेण आदर्शं प्रदर्श्य मूलमन्त्रेणमुख-वासताम्बूलादीनि दत्वा श्रियादिदेवीनामेतावत्पर्यन्तं कृत्वा वामदेव्येन तैलाभ्यङ्गं कृत्वा 'श्रियेते पृश्निरूपसेचनीभूत्' इति ऋचा माषचूर्ण, चन्दनचूर्णादिना विग्रहोद्वर्तनं कृत्वा 'मूर्धानं दिव' इति गन्धान् केशेषु लेपयित्वा 'विष्णोर्नुकमित्यामलकतोयं दत्वा 'नते विष्णो' इति केशान्प्रक्षाल्य 'आपो यं वः प्रथममि'ति सूक्तेन अङ्गप्रक्षालनं कृत्वा 'आपो हिष्ठे'ति तिसृभिरभिषेकं कृत्वा 'अतो देवा अवन्त्विति' कङ्कतेन केशान् परिमृज्य व्याहृत्या प्लोतवस्त्रेण अङ्गं परिमृज्य 'हिरण्यवर्णां हरिणी'मिति हरिद्रालेपनं कृत्वा 'हिरण्यवर्णाश्शुचय' इति चतसृभिः प्रक्षाल्य 'विष्णोर्नुक'मितिमन्त्रेण पुण्यक्षेत्रादिमृद्वारिभिः 'तद्विष्णोरि'तिसहदेव्यादिमूलवारिभिः 'प्रतद्विष्णु'रिति पलाशादि पल्लवाम्बुभिः 'देवस्यत्वेति कुसुमतोयैः 'आवां मित्रावरुणेति सर्षपाद्यम्बुभिः 'ध्रुवा द्यौरितिमन्त्रेण तिलादिवारिभिः 'भद्रङ्कर्णेभिरिति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मन्त्रेण श्यामाकाद्यम्बुभिः 'नते विष्णो' इति काशमूलाद्यम्बुभिः 'इरावती' इति मन्त्रेण तुलसीपात्रादिवारिभिः 'अतो देवा अवन्त्वि'ति मुस्ताद्यंबुभिः 'इदं विष्णु'रितिमन्त्रेण मुद्गादितोयैः 'त्रीणिपदे'ति मन्त्रेण शङ्खपुष्पादितोयैः 'विष्णोः कर्माणी'ति श्वेतार्कादितोयैः 'तद्विष्णो'रिति सुरभ्यादिजलैः 'तद्विप्रास' इति लोहवारिभिः 'इन्द्रा विष्णू' इति मातुलिङ्गदाडिमबदरीफलांभसा 'प्रवायुमच्छे'ति मन्त्रेण जम्बूनागरबदरीफलांभसा 'वषट्ते विष्णो' इति मन्त्रेण तक्कोलैला-बदरफलांभसा 'तिस्रोवाच' इति क्षीरिकामलकबदरफलांभसा 'इषे-त्वोर्जेत्वे'ति मन्त्रेण द्राक्षाखर्जूरबदरफलाम्भसा 'स्त्रीरीत्व'दिति मन्त्रेण चूतपारावतबदरफलांभसा 'यस्मिन्विश्वा'निइति मन्त्रेण क्षुद्रपनसबदरफलांभसा 'पर्जन्याये'ति मन्त्रेण बिल्वकदलीबदरफलांभसा 'यज्ञायज्ञीय' मन्त्रेण सर्वफलाम्बुभिः 'सहस्रशीर्षं देव'मिति उशीर-वीरणमूलतमालपत्रवारिणा 'विश्वतः परमंनित्य'मिति कर्पूरकुङ्कुमतमाल-पत्रवारिणा 'पतिंविश्वस्ये'ति चम्पकमुकुलमांसीतमाल पत्रतोयेन 'नारायण परंब्रह्म' इति चन्दनद्वयतमालपत्रवारिणा 'यच्चकिञ्चि'दिति सुरपर्णीरजो मुराकर्दमतमालपत्रवरिणा 'अनन्तमव्यय'मिति गिरिजमूलप्रैयङ्गवरजस्त-मालपत्रवारिणा 'अधो निष्ट्याविति मन्त्रेण कुष्ठद्वयतमालपत्रवारिणा 'सन्ततं सुराभिरिति अगरुद्वयतमालपत्रवारिणा एताभिरष्टाभिस्समस्ताभि-र्ऋग्भिः सर्वगन्धांभसा 'या दिव्या आपः इति मन्त्रेण वापीनलिनी निर्झरवारिणा 'आपोहिष्टे'ति मन्त्रेण सरिन्नलिनीनिर्झरतोयेन 'ये ते शत मितिमन्त्रेण कूपनलिनीनिर्झरतोयेन 'इमं मे वरुणेति हिमनलिनी निर्झराम्भसा 'शन्नो देवीरिति वृष्टनलिनीनिर्झरतोयेन 'यासाँराजेति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

गङ्गानलिनीनिर्झरतोयेन 'समुद्रज्येष्ठा इति समुद्रनलिनीनिर्झरजलेन 'यासां देवा इति तटाकनलिनी निर्झरजलेन वरुणसूक्तेन सर्वाम्भसा 'त्रातारमिंद्र-मिति मन्त्रेण यवशाल्यंभसा 'आत्वावहन्त्विति मन्त्रेण गोधूमशाल्यंभसा 'जितन्त इति मन्त्रेण व्रीहिशालितोयेन 'आपोवाइदमिति शालितोयेन 'तावतीरोषधय' इति मुद्गशालितोयेन 'सत्वंनो अग्न' इति प्रियङ्गुशालि-तोयेन 'त्वं नो अग्न 'इति माषशालितोयेन महाव्याहृतीभिः श्यामाकशालि-तोयेन 'अणोरणीयानिति यवाद्यष्टधान्यसहित नीवारतोयेन गायत्र्या गोमूत्रेण 'गन्धद्वारामिति गोमयेन पयोंव्रतेन पयसा दधिक्राव्णेति दध्ना 'घृतंमिमिक्षे'ति घृतेन विष्णोरराटमसी'ति उष्णोदकेन 'मूर्धानं दिव' इति पञ्चगव्येन 'हिरण्य गर्भ' इति मन्त्रेण पञ्चामृतेन 'आप्यायस्वे.ति सक्तुभिः राक्षोघ्नसाम्ना मृज्जलेल 'पवित्रन्त' इति कर्पूरवारिणा 'भगवान् वासुदेव' इति लाजवारिणा, देवव्रतसाम्नाभिमन्त्रितजलेन वैयाघ्रसाम्ना गुडवारिणा अपराजितसाम्ना तैलेन द्वादशाक्षरमन्त्रेण पाद्यतोयेन 'द्रुपदादिव' इत्यर्घ्यतोयेन अष्टाक्षरेणाऽऽचमनतोयेन 'शन्नोदेवी'रिति मङ्गलांभसा 'हिरण्य पाणिमि'तीक्षुरसैः 'वेदाह'मिति मन्त्रेण सर्षपतोयेन 'आनोनि-युद्भि'रिति 'सर्वगन्धरसैः श्रीसूक्तेन शान्तिद्रव्यवारिभिः 'मधुमान्न' इति 'मधुनक्तमिति च 'मधुवाता' इति च नालिकेररसैः 'सहस्रशीर्षा पुरुष' इति सूर्यकान्तपद्मरागजलेन 'पुरुष एवेद'मिति वैडूर्यचन्द्रकान्त-जलेन 'एतावानस्ये'ति इन्द्रनीलकान्तजलेन 'त्रिपादूर्ध्व' : इति प्रवाल-गारुत्मतजलेन 'तस्माद्विराडजायत' इति पुष्परागस्फटिकजलेन 'यत्पुरुषेणह-विषे'ति पद्मरागकनकजलेन 'सप्तास्यासन्नि'ति वज्ररजतजलेन 'तं यज्ञ'मिति ताम्रमुक्ताजलेन तस्माद्यज्ञादि'त्यष्टाभिर्ऋग्भिर्मूलमन्त्रेण च शुद्धांभसा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

संस्नाप्य पुनः मूलमन्त्रेण हरिद्रामालिप्य 'हिरण्यवर्णा' इति चतसृभिः प्रक्षाल्य विष्णुसूक्तेन गन्धाम्बुना प्रक्षाल्य विष्णुगायत्र्या कुङ्कुमेनालिप्य "पावमानीभिः ब्रह्मयज्ञेन 'कयानश्चित्रआभुव'दिति प्रक्षाल्य 'युवासुवासा' इति वस्त्रं दत्वा प्रणवेनोत्तरीयं दत्वा पवित्रमन्त्रेण पवित्रं दत्वा मूलमन्त्रेण विष्णुगायत्र्या च अर्घ्यं पाद्यं च दत्वा 'शन्नो देवी'रित्याचमनीयं दत्वा सावित्र्या परिषिच्य मूलमन्त्रेण गन्धपुष्पधूपदीपाचमनीयानि दत्वा

"देवदेव सुरास्सर्वे सिद्धाश्च परमर्षयः ।
त्वत्सेवार्थमिहायातान् स्नानेनैतान् कृतार्थय ॥

इति सर्वमङ्गलस्नानं प्रार्थ्य पुरुषसूक्तेन 'अद्भयस्संभूत' इत्यनेन नारायणानुवाकेन विष्णुसूक्तेन श्रीसूक्तेन जितन्ते इति विद्यया च सर्वमङ्गलयुक्तं सहस्रधारा स्नपनंकृत्वा 'श्रियंजात' इत्यृचा नीराजनं दत्वा मूलमन्त्रेणाचामनं दत्वा अतिमलपवित्रमन्त्राभ्यां स्नानं दत्वा 'युवं वस्त्राणी'ति शिरसः प्लोतमुष्णीषं दत्वा 'अग्निर्मूर्धे'ति मन्त्रेण प्लोतवाससाऽङ्गं परिमृज्य विष्णुगायत्र्या द्वे धौते निर्मलेवस्त्रे दत्वा प्रणवेन ब्रह्मसूत्रमुत्तरीयञ्च दत्वा 'आपः पुनात्वित्याचमनीयं दत्वा मूलमन्त्रेणपवित्रं दत्वा

"स्नातं भगवता देव मन्त्रसंभाविताम्बुभिः ।
वयं व्यपगतक्लेशा जातास्मविगतांहसः" ॥

इति विज्ञाप्य

"सम्पन्नं देव सद्वस्त्रभूषास्रक्चन्दनादिकम् ।
अलंकारासनं भद्रं अधितिष्ठ तृतीयकम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इत्यनुज्ञाप्य ओं अलङ्कारासनाय नम इति अलंकारासनमभ्यर्च्य 'ओं भगवत्पादुकाभ्यां नम इति पादुके गन्धादिभिरभ्यर्च्य ओं भगवन् इमे पादुके इति मूलमन्त्रेण पादुके दत्वा मूलमन्त्रेणालंकारासनमानीय पूर्ववत् स्नानीयवर्जं अर्घ्यपाद्याचमनसर्वार्थतोयानिकल्पयित्वा मूलमन्त्रेणार्घ्य-पाद्याचामनीयगन्धपुष्पाणि दत्वा॰ एवं श्र्यादिदेवीनाञ्च कृत्वा 'मूर्धानं दिव' इति ऋचा अगरुधूपेन केशान् संशोष्य मूलमन्त्रेण कर्पूररजसा आपादतल-मस्तकमालिप्य इदं विष्णुरिति शुचिना सुगन्धिना चन्दनेन वपुषि आलेपनं कृत्वा विष्णुगायत्र्या कस्तूरिकां मृगमदं च दत्वा प्रणवेन कुङ्कुमेनालिप्य विष्णुगायत्र्या वेदादिभिश्च पीतकौशेयधारणं कृत्वा 'त्रातारमिन्द्र'मिति मौलिमालां दत्वा 'सहस्रशीर्षे'ति ऋचा शिरसि किरीठं दत्वा 'ऋक्सामाभ्या-माभहिताविं'ति श्रोत्रयोः कुण्डले विन्यस्यदमूनसो अपसोयोसुहस्ता' इति केयूराङ्गदभूषणानि दत्वा 'विश्वेदेवस्यनेतु' रिति हारं दत्वा 'हस्ताभ्यां दशशाखाभ्यां' इत्यङ्गुलीषु अङ्गुलीयकान् दत्वा 'यस्य त्री पूर्णा मधुना पदानि' इति नूपुरे विन्यस्य 'नकि रिन्द्रत्वदुत्तर' इति कटिसूत्रं दत्वा जितन्त इति मन्त्रेण अन्यानि भूषणानि दत्वा ब्रह्मणाते ब्रह्मयुजा युनज्मी'ति यज्ञोपवीतं दत्वा 'ऋतस्य तन्तुं विततः' पवित्र इति कुशपवित्रं दत्वा 'युवं वस्त्राणी'त्युत्तरीयं दत्वा 'तद्विष्णो'रिति मन्त्रेण पुष्पमालाः पुष्पाणि च दत्वा 'इरावती'तिमन्त्रेण पयोदध्यक्षतान् दत्वा 'तद्विष्णो'रिति मन्त्रेण श्वेतमृत्स्नया तिलकं दत्वा' 'हिरण्यवर्णां हरिणी'-मित्यृचा श्रीचूर्णं दत्वा विष्णुगायत्र्या शलाकया अञ्जनं दत्वा 'रूपं रूप'-मिति व्याहृत्या च दर्पणं प्रदर्श्य जितन्त इतिमन्त्रेण अगरुधूपं दत्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'उद्दीप्यस्वे'तिमन्त्रेण दीपं दत्वा 'शन्नोदेवीरित्याचमनं दत्वा 'स्वस्तिदा विशस्पति'रिति शङ्खाद्यायुधानिदत्वा "ओं यानासनाय नमः इति यानासनमभ्यर्च्य ओं भगवत्पादुकाभ्यां नमः इति भगवन् इमेपादुके इति ते दत्वा आस्थानमण्डपाय नमः "राजानावनभिद्रुह इत्यास्थानप्रवेशनं ध्यात्वा ओं सहस्रशिरसे अनन्तायनागराजाय नम इत्यासनं पादपीठं च दत्वा मूलमन्त्रेण मुखवासनं ताम्बूलञ्च दत्वा, एवं श्र्यादि देवीनाञ्च कृत्वा "द्यौर्नयइन्द्रे'ति मुक्तामयच्छत्रं दत्वा 'सोमः पवते जनितामतीना'मिति चामराणि दत्वा सोमपूषणेति मयूरपिञ्छव्यजन तालवृन्तौ दत्वा विष्णुगायत्र्या 'आत्यमूषु वाजिन'मिति तार्क्ष्यसूक्तेन 'सुपर्णोऽसिगरुत्मानिति यजुषा तर्क्ष्यसाम्नाच गरुडध्वजं दत्वा 'इन्द्रं विश्वाअवीवृध'न्निति रथं "आतूनइन्द्रक्षुमन्त मितिगजं त्वष्टारमित्यश्वं बृहद्रथन्तराभ्यां शिबिकान्दोलिकादिवाहनानि दत्वा वामदेव्यराजनभद्रश्रेयो यज्ञायज्ञियैर्नृत्तगतिशङ्खचिह्नकाहलवेणुवीणाभेर्यादि सकलविधवाद्यादिभिरभ्यर्च्य मङ्गलपठनं कुर्वन् नीराजनं पञ्चपिण्डप्रक्षेपणञ्चकृत्वा

तिलतण्डुलताम्बूलतपनीयघृताम्बरैः ।
पूरितां दर्शये मात्रां पात्रेणप्रणतार्तिहन् ॥

भोगापवर्गफलदान् भुंक्ष्वभोगान्जगद्गुरो ।
सतामप्यसतामेषां अस्तुते परिपूर्णता ॥

इति विष्णुगायत्र्या च तिलवस्त्रहेमताम्बूलशालितण्डुलफलगव्याहारगोधान्य गोग्रासादि सर्वभोगपूरणीं मात्रां देवसन्निधौ दर्शयित्वा यथाशक्ति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वसुदानं कारयित्वा जलपूर्णघटदीपमानीयशोषणदाहनप्लावनानिकृत्वा ऋग्वेदाय नमः हरिः ओम् 'अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् । ओं यजुर्वेदाय नमः हरिः ओं इषेत्वोर्जेत्वा वायवस्थोपायवस्थदेवोवस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे 'ओं साम-वेदाय नमः हरिः ओं अग्न आयाहि वीतयेगृणानो हव्यदातये । निहोता सत्सि बर्हिषि । ओं अथर्वणवेदाय नमः हरिः ओं शान्नोदेवीरभिष्टय आपोभवन्तु पीतये शंयोरभिस्स्रवन्तुनः । ओं आयुर्वेदाय नमः ओं धनुर्वेदाय नमः । ओं गान्धर्ववेदाय नमः । ओं श्री पाञ्चरात्रशास्त्राय नमः ।

" जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥

ओं शिक्षायै नमः ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतंयथा ।
शास्त्रानुपूर्वं तद्विद्यात् यथोक्तं लोकवेदयोः ॥

ओं छन्दसे नमः । छन्दः गायत्रीदैव्येकम् आसुरी पञ्चदश प्राजापत्याष्टौ यजुषां षट् साम्नां द्विः ऋचां त्रिः द्वौ द्वौ साम्नां वर्धयत त्रीन् त्रीन् ऋचां । ओं निरुक्ताय नमः । ओं समाम्नायः समाम्नातः सव्याख्यातव्यः । तमिमं समाम्नायं निघण्टवइत्याचक्षते । ओं ज्योतिषाय नमः ।

पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम् ।
दिनर्त्वयनमासाङ्गं प्रणम्यशिरसाशुचिः ॥


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रणम्य शिरसा कालं अभिवाद्य सरस्वतीं ।
कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मनः ॥

ज्योतिषामयनं कृत्स्नं प्रवक्ष्याम्यानुपूर्व्यशः ।
विप्राणां संमतं लोके यज्ञकालार्थसिद्धये ॥

ओं कल्पसूत्राय नमः । अथातो दर्शपूर्णमासौ व्याख्यास्यामः । अथ कर्माण्याचाराण्यानि गृह्यन्ते । अथैतस्य

समाम्नायस्य विधाने योगाद्यपत्यं वक्ष्यामः ।

अथातो विद्धयपदेशे मन्त्रविधिश्चाग्रहणेन । ओं व्याकरणाय नमः । अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठ चटतव् कपय् । शषसर् । हल् । वृद्धिरादैच् । ओं मीमांसाभ्यां नमः । अथाऽतो धर्मजिज्ञासा । अथाऽतो ब्रह्मजिज्ञासा । अनावृत्तिश्शब्दादनावृत्तिश्शव्दात् । ओं न्यायशास्त्राय नमः । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानां तत्वज्ञानान्निश्रेयसाधिगमः । ओं पुराणेभ्यो नमः ।

तं दृष्ट्वाशत्रुहन्तारं महर्षीणांसुखावहम् ।
बभूवहृष्टावैदेहो भर्तारं परिषस्वजे ॥

तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः ।
पीतांबरधरस्रग्वी साक्षान्मन्मथ मन्मथः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥

ओं इतिहासेभ्यो नमः ।

नमो धर्माय महते नमः कृष्णायवेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥

ओं स्मृतिभ्यो नमः ।

आपोनारा इति प्रोक्ता आपो वै नरसूनवः ।
तावदस्यायनं पूर्वं तेन नारायणःस्मृतः ॥

ओं अथातः सामयाचारिकान् धर्मान्व्याख्यास्यामः । ओं अर्थशास्त्रेभ्यो नमः ।

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैस्सहपार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत् सभाम् ॥

श्रीरङ्गादिस्थलमाहात्म्यादींश्च पठेत् ।

एवं स्वाध्यायाध्ययनं वेदाङ्गानि स्तोत्राणि च पठित्वा मूलमन्त्रेण पुष्पं प्रदाय मूलमन्त्रेण घटदीपमादाय देवस्य आपादतलमस्तकं त्रिः दर्शयित्वाऽऽचमनीयं दत्वा प्रत्यक्षरं पुष्पं प्रदाय द्वादशाक्षरेण विष्णुगायत्र्या श्र्याादिमन्त्रेण पञ्चोपनिषदैः पुरुषसूक्तश्रीसूक्तऋग्भिः प्रत्येकं पुष्पं प्रदाय अन्यैश्च सहस्रनामादिभिर्भगवन्मन्त्रैश्शक्तश्चेत्पुष्पं प्रदाय भूषणादि पारिषदान्तानां तत्तन्मन्त्रैः स्नानभूषणगन्धपुष्पधूपदीपान्तं कुर्यात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यद्वा परिजनपरिच्छदपार्षदानां गन्धादीनेव कृत्वा प्रणम्य प्रतिदिशं प्रदक्षिणप्रणामपूर्वकं पुष्पं दत्वा द्वितीये प्रदक्षिणे

"जितन्ते पुण्डरीकाक्ष वासुदेव स्मितद्युते ।
रागादिदोषनिर्मुक्त समग्रगुणमूर्तये ॥

नाथज्ञानबलोत्कृष्ट नमस्ते विश्वभावन ।
सङ्कर्षणविशालाक्ष सर्वज्ञ परमेश्वर ॥

देवेशैश्वर्यवीर्यात्मन् प्रद्युम्नजगतांपते ।
नमस्तेऽस्तुहृषीकेश जगन्मूर्ते जगन्मय ॥

स्थित्युत्पत्तिलयत्राण हेतवे शक्तितेजसे ।
जयानिरुद्ध भगवन् महापुरुषपूर्वज ॥

इति पूर्ववत्प्रणम्य श्रुतिसुखैः स्तोत्रैः स्तुत्वा स्वात्मानं नित्यकिङ्करतया निवेद्य तथैव ध्यात्वा यथाशक्ति मूलमन्त्रं जपित्वा

"ऐश्वर्येणोपचारेण विविधेन विशेषतः ।
भोगयागेन भगवन् प्रीयतां मे वरप्रद ॥

इति विज्ञाप्य

देवदेव जगन्नाथ प्रणतार्तिहराच्युत ।
प्राप्तेतु प्रापणे काले भवत्यानीत एष ते ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मृष्टमेध्यस्थिरान्नानि भक्ष्यभोज्यान्यनेकशः ।
सम्पन्नानि जगन्नाथ भोज्यासनमुपाश्रय ॥

इति विज्ञाप्य अर्घ्यं दत्वा ओं भोज्यासनाय नमः इति भोज्यासनं गन्धपुष्पधूपदीपैरभ्यर्च्य 'ओं भगवत्पादुकाभ्यां नम' इति पादुके गन्धादिभिरभ्यर्च्य ओं भगवन्! भोज्यासनमङ्गीकुरुष्व ओं भगवन्! इमे पादुके इति विज्ञाप्य भोज्यासनोपविष्टे भगवति गायत्र्याऽर्घ्यं विष्णु-गायत्र्या पाद्यं 'आपःपुनन्त्वि'त्याचमनं 'गन्धद्वारा'मिति गन्धान् 'आयनेत' इति पुष्पाणि दत्वा प्रणवेन कर्पूरादिवासितं अर्घ्यजलं दत्वा श्र्यादिदेवीनां भोज्यासनाद्येतदन्तं कृत्वा गुडं माक्षिकं सर्पिः दधि क्षीरं चेति मधुपर्कं पात्रे निक्षिप्य शोषणदाहनप्लावनैर्विशोध्य अर्घ्यजलेन प्रोक्ष्य अस्त्रमन्त्रेण रक्षां कृत्वा सुरभिमुद्रां प्रदर्श्य 'ओं भगवन्! मधुपर्कं प्रतिगृह्णीष्वेति विज्ञाप्य 'यदीँ सोमावभ्रुधूता' इत्यृचा 'मधुवाता' इति ऋचा च मधुपर्क-मवनतशिरा हर्षोत्फुल्लनयनो हृष्टमना भूत्वा प्रदाय 'अनस्वन्ता सत्पति'रिति शीतलोदकं तर्पणमाचमनीयं दत्वा

" मधुपर्काख्ययागेन यन्मयाकल्पितं विभो ।
यागे न्यूनातिरिक्तं तत् क्षम्यतां प्रीतये प्रभो ॥

इति विज्ञाप्य एवं श्र्यादिदेवीनां कृत्वा गां स्वर्णरत्नादिकं च यथाशक्ति दत्वा आस्यशोधनार्थं प्रणवेन ताम्बूलं दत्वा 'अर्चन्तस्त्वाहवामहे' इत्यक्षतान् दत्वा 'विष्णोर्नुक'मिति सूक्तेन धूपं दत्वा 'भवामित्र' इति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूक्तेन दीपं दत्वा 'शन्नो देवी'रित्याचमनीयं दत्वा विष्णुगायत्र्या प्रक्षालिते राजते ताम्रे हिरण्मये मृन्मयेवा भाण्डे प्रणवेनाभिमन्त्रिते मूलविद्यया तण्डुलान्निक्षिप्य पञ्चोपनिषन्मन्त्रैर्वारिभिः पञ्चधाप्रक्षाल्य प्रणवेन पचनपात्रे तण्डुलान् पूरयित्वा सुदर्शनमन्त्रेण अङ्गुल्यामधिकृत्य मूलमन्त्रेणाग्निमुपसमिध्य पञ्चोपनिषन्मन्त्रैः काष्ठैरग्निं प्रज्वाल्य सम्यक् पचनं कृत्वा भगवद्यागयोग्यानि व्यञ्जनानिचाज्ये पक्त्वा सौवर्णादीनि नैवेद्यपात्राणि विष्णुगायत्र्या प्रक्षाल्य सम्यक्परिमृज्य तेषु आज्याढयं सुसंस्कृतमन्नं भक्ष्यभोज्यादिकं मधुरादि रसोपेतं विध्युक्तमन्यत्पक्वं फलमूलव्यञ्जनादिकं दधिक्षीरमधूनि च मोदकाद्यपूपवस्तूनि च पायसान्नमुद्गान्न गुडोदन-दध्योदनादीनि च पानकानि सुवासितानि पानीयानिचान्यानि लोके प्रियतमानि आत्मनश्चेष्टानि शास्त्राविरुद्धानि संभृत्यास्त्रमन्त्रेण वासोभिः प्रच्छाद्य पाकगृहान्नियमयुक्तैः परिचर्यापरैः धृतोष्णीषैराच्छादितवदनै र्विप्रैरग्रेभूमौ जलधारानिषेचनमङ्गलवाद्यघोषपुरस्सरं आनीतानि 'वितुन्नस्तोष'मितिसूक्तेन देवस्यपुरतो निहितानिकृत्वा प्रणवेन 'समुद्रा-दूर्मि'रितिसूक्तेन हवींषि आज्यधारया सिक्त्वा 'तदस्थानीकमुतचारुनामे'ति सहिरण्यंघृतंनिधाय शोषणदाहनप्लावनानिकृत्वा अस्त्रमन्त्रेण ओं पूर्विकाभि र्व्याहृतीभिश्च अर्घ्यजलेन प्रोक्ष्य 'बलाय कवचायहुं' इति वर्मणा 'सत्यंत्वर्तेन परिषिञ्चामी'ति च परिषिच्य सुरभिमुद्रां प्रदर्श्य प्रणवेनार्हणजलं भगवतो दक्षिणहस्ते दत्वा निवेदयेत् ।

"पायसान्नं गुडान्नं च मुद्गान्नं शुद्धमोदनम् ।
दधिक्षीराज्यसंमिश्रं नानापूपफलान्वितम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्रभूतमथनैवेद्यं भक्ष्यभोज्यान्यनेकशः ।
मधुराद्यारसास्सर्वे शाकाद्याबहुमूलकाः ॥

मोदकानि विचित्राणि हृद्यपूपव्यञ्जनानि च ।
उपपन्नमसङ्कीर्णं सर्वदोषविवर्जितम् ॥

असत्यमशुचिर्नीचं अपराधैकभाजनम् ।
अल्पशक्तिमचैतन्यं अनर्हं त्वत्क्रियास्वपि ॥

मामवादृत्य दुर्बुद्धिं स्वयैवकृपया विभो ।
अतिप्रभूतमत्यन्त भक्तिस्नेहोपपादितम् ॥

शुद्धं सर्वगुणोपेतं सर्वदोषविवर्जितम् ।
स्वानुरूपं विशेषेण स्वदेव्योस्सदृशं गुणैः ॥

त्वमेवेदं हविः कृत्वा स्वीकुरुष्व सुरेश्वर ॥
शर्करामधुसंयुक्तं देवीभिस्समुपाश्रितम् ॥

ताभिर्निवेद्यमानञ्च प्रीत्या स्वीकुरु माधव ।

अतिप्रभूतमतिप्रियतममतिसमग्रमत्यन्तभक्तिकृतमिदमिति मत्वा स्वीकुर्वि त्यनुसंधाय 'तमस्मेरा युवतयो युवानं' इति "अमृतोपस्तरणमसी"ति चापोऽशनं दत्वा 'अग्ने विधस्व दुषस' इति पञ्चभिर्ऋग्भिः 'प्राणेनिविष्टो अमृतं जुहोमीत्यादिभिः पञ्चभिर्मन्त्रैश्च परमात्मनि क्रमेण प्राणाहुतीर्हुत्वा ब्रह्मणि म आत्मेद्यनुसन्धाय दक्षिणेन जान्वा भूमिं स्पृशन् वामकरपृष्ठेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

दक्षिणकरमुन्नम्य दक्षिणकरेण गृहीतान् ग्रासान् पुष्पेण ग्रासमुद्रां दर्शयन् 'परोमाग्नयेतिसूक्तं' 'अहमस्मीत्यन्नसूक्तं' च पठन् देवस्यत्वे'ति मन्त्रेण देवस्य दक्षिणहस्ते निर्वाप्य हविर्निवेद्य 'तुभ्यं हिन्वानो वसिष्ठगा आप' इति पानीयं पयःप्रभृति अनुपानशीतलोदकतर्पणानि कृत्वा "इन्द्र पिब प्रतिकामं सुतस्ये'ति 'अमृतापिधानमसी'ति चापोशनं दत्वा 'पूत आश्विनीः पवमानधीजव' इति माषचूर्णेन एला चन्दनक्षोदवारिणा च हस्तप्रक्षालनं कृत्वा 'सरस्वतीं देवयन्तो हवन्त' इति अद्भिर्वक्त्रगण्डूषं कृत्वा विष्णुगायत्र्या मुखपादपाणि प्रक्षाळनं कृत्वा 'वृष्टिं दिवः शतधारः पवस्वेति द्वाभ्या-माचमनं दत्वा 'शिशुञ्जज्ञानं हर्यतं मृजन्ती'ति मुखहस्तपादान् संमृज्य 'गन्धद्वारामिति चन्दनं मुखवासं च दत्वा एवं श्र्यादिदेवीनां नैवेद्यं कृत्वा 'दक्षिणवता'मिति 'मानचित्रे'ति ऋचा ताम्बूलं दत्वा 'स्वादुः पवस्वे'ति ऋचा आचमनं दत्वा प्रणम्य,

अनेनान्नाद्ययागेन सम्यगाराधितेनच ।
पद्मनाभोऽरविन्दाक्षः प्रीतिमभ्येतुमेऽच्युतः ॥

इति विज्ञाप्य मन्त्रासनं कूर्चेन मार्जयित्वा

"ओं मन्त्रासनाय नम इति मन्त्रासनं गन्धपुष्पधूपदीपैरभ्यर्च्य 'ओं भगवत्पादुकाभ्यां नम इति पादुकेगन्धपुष्पधूपदीपैरभ्यर्च्य,

"पद्मनाभोरविन्दाक्ष प्रणतार्तिहरप्रभो ।
श्रीभूनीलासमेतस्त्वं प्रसीदाच्युतमेऽन्वहम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

इति पादुके प्रार्थ्य ओं भगवन्? मन्त्रासनमासादय ओं भगवन्निमे पादुके इति विज्ञाप्य मन्त्रासनोपविष्टे भगवति देवीषु च माल्यादिकमपोह्य विष्वक्सेनाय दत्वा विष्णुगायत्र्याऽर्घ्यं दत्वा 'त्रीणिपदे'ति पाद्यं दत्वा प्रणवेन आचमनीयं दत्वा 'इदं विष्णु'रिति गन्धान् दत्वा 'तद्विष्णो'रिति पुष्पाणि दत्वा 'जितंत' इति धूपं दत्वा 'उद्दीप्यस्वे'ति दीपं दत्वा 'शन्नोदेवी'रित्याचमनं दत्वा देवस्यत्वेत्यपूपपृथुकसक्तुगुडमिश्रतिलपिण्ड-मथितपानीयनालिकेराम्बुफलादिकं निवेद्य 'आपःपुनन्त्वि'त्याचमनं दत्वा विष्णुगायत्र्या मुखवासद्रव्यं दत्वा प्रणवेनताम्बूलं दत्वा एवं श्रचादीनां दत्वा मूलमन्त्रेण नृत्तगीतवाद्यादिभिरभ्यर्च्य 'आयंगौ'रिति सूक्ताभ्यां पुष्पाञ्जलिं दत्वा 'आत्वाहार्ष'मिति ध्रुवसूक्तेन नीराजनं दत्वा पूर्ववत् 'जितन्त' इति मन्त्रेण प्रदक्षिणद्वयं कृत्वा मन्त्ररत्नेन दण्डवत्प्रणम्य श्रुति सुखैः स्तोत्रैः-स्तुत्वा

> अज्ञानतोऽप्यशक्त्याचा आलस्याद्दुष्टभावतः ।
> कृतापराधं कृपया क्षन्तुमर्हसि मां विभो ॥

इति विज्ञाप्य 'भगवन्! विष्वक्सेनार्चनमनुजानीहि' इत्यनुज्ञाप्य भगवन्निवेदि-ताद्धविषः विष्वक्सेनाय किञ्चिदुद्धृत्य अन्यत्र निधाय अन्यत्सर्वमनन्ताय गरुडाय सुदर्शनादि दिव्यायुधेभ्यश्च परकालादिस्वाचार्यप्रमुखेभ्यः श्री वैष्ण-वेभ्यश्च तत्तन्मन्त्रेण प्रदद्यात् ।

'अनन्तमव्ययं कवि'मित्यनेन अनन्त मन्त्रेण अनन्तस्य षोडशोपचार-पूजां कुर्यात्!


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'तत्पुरुषाये'ति गरुडगायत्र्या गरुडपञ्चाक्षरेण वा गरुडपूजां कुर्यात्। सुदर्शनषडक्षरेण सुदर्शनस्य 'ओं सं मोहहुं फट्'

पाञ्चजन्यमन्त्रेण शंखस्य च पूजांकुर्यात्। अन्येषां प्रणवादि चतुर्थ्यन्तैस्तत्तन्नामभिः पूजयेत्!

यद्वा ओं नं नन्दकाय नमः। ओं शं शार्ङ्गाय नमः। ओं कौं कौमोदक्यै नमः। ओं पं पद्माय नमः। ओं शं शठकोपाय नमः। ओं पं परकालाय नमः। ओं रं रामानुजाय नमः। इत्यादिभिः तत्तन्मन्त्रैः पूजां कुर्यात्। भगवद्यागशिष्टजलादिभिर्द्रव्यैर्विष्वकसेनमभ्यर्च्य पूर्वोद्धृतंहविश्च दत्वा तदर्चनं परिसमापयेत्।

'ओं पर्यङ्कासनाय नमः' इति पर्यङ्कासनं गन्धादिभिरभ्यर्च्य 'ओं भगवत्पादुकाभ्यां नम' इति पादुके गन्धादिभिरभ्यर्च्य 'ओं भगवन्? पर्यङ्कासनमासादय, भगवन्! इमे पादुके इति विज्ञाप्य पर्यङ्कासनोपविष्टे भगवति विष्णुगायत्र्याऽर्घ्यं दत्वा 'त्रीणिपदे'ति 'पाद्यं दत्वा 'शन्नोदेवी'रित्याचमनीयं दत्वा सर्वाणिमाल्यभूषणानि वासश्चा-पनीय विष्वक्सेनाय दत्वा 'युवा सुवासा' इति सुख शयनोचितं वासो दत्वा 'विश्वजितं धनजित इति सूक्तेन तदुचितानि शुभानि मृदूनि भूषणानि दत्वा 'ब्रह्मणातेब्रह्मयुजा 'इत्युपवीतं दत्वा शन्नोदेवी'रित्याचमनीयं दत्वा

गन्धद्वारामिति गन्धान् दत्वा 'आयनेत' इति पुष्पाणि दत्वा जितन्त इति धूपं दत्वा 'उद्दीप्यस्वे'ति दीपं दत्वा प्रणवेनाचमनीयं दत्वा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

'इदं विष्णु'रिति मुखवासं दत्वा तद्विष्णोरिति ताम्बूलं दत्वा स्वादुपवस्वे'-त्याचमनीयं दत्वा 'आत्वाहार्ष'मिति नीराजनं दत्वा श्रुति सुखैः स्तोत्रैरभिष्टूय एवं श्च्यादि देवीनां तत्तन्मन्त्रेण दत्वा ओं भगवानेव स्वनियाम्यस्वरूपस्थिति प्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्चदेहेन्द्रियान्तःकरणैः स्वकीयकल्याणतम द्रव्यमयान् औपचारिकसांस्पर्शिकाभ्यवहारिकादिसमस्तभोगान् अतिप्रभूतानति-प्रियतमानतिसमग्रानत्यन्तभक्तिकृतान् अखिल परिजन परिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादितवान् इत्यनुसंधाय ओं कृतञ्च करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्यभगवद्वासुदेवपादारविन्दा-र्चनेन इज्याख्येन भगवत्कर्मणा भगवान् प्रीयतां वासुदेव इत्यनुसंधाय

" मनोबुद्ध्यभिमानेन सहन्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥

प्रदक्षिणसमेतेन ह्येवंरूपेणसर्वदा ।
अष्टाङ्गेन नमस्कृत्य ह्युपविश्याग्रतो विभोः ॥

इत्युक्ताष्टाङ्गप्रणामेन भगवन्तं प्रणम्य 'अखिले'त्यादिना शरणमुपगच्छेत् ।

ततश्च विष्णु गायत्र्याऽर्घ्यं दत्वा 'यज्ञो देवानां प्रत्येतिसुम्न'मिति सूक्तेनोपस्थानं कृत्वा 'तद्विष्णो'रिति द्वाभ्यां प्रणम्य मन्त्ररत्नेन स्वात्मानं निवेद्य 'ओं भगवन्! मन्त्रमूर्ते! स्वपदमासादय इत्युद्धरिण्याऽर्घ्यंजलमादाय भगवन्मूर्ध्नि किञ्चित्प्रदाय आवाहनरीत्या बिम्बात् भगवन्तं स्वहृदये उद्वास्य गन्धपुष्पधूपदीपनैवेद्यादिभिः पञ्चोपचारैर्हृदयपुण्डरीकस्थं भगवन्त-मभ्यर्च्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उपचारापदेशेन मयैव विहितान् प्रभो ।
अपचारानशेषांश्च क्षमस्वपुरुषोत्तम ॥

अज्ञानादथवाज्ञानात् अशुभं यत्कृतं मया ।
क्षन्तुमर्हसि तत्सर्वं दास्येनैव ग्रहाण माम् ॥

ज्ञानतोऽज्ञानतोवापि यथोक्तं न कृतं मया ।
तत्सर्वं पूर्णमेवास्तु तृप्तो भवतु सर्वदा ॥

ओमच्युत जगन्नाथ मन्त्रमूर्ते सनातन ।
रक्ष मां पुण्डरीकाक्ष स्वापराधं क्षमस्व च ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मया देव परिपूर्णं तदस्तुते ॥

पन्नगाधीशपर्यङ्के रमाहस्तोपधानिते ।
सुखं शेष्व रमाधीश सुदर्शन सुरक्षित ॥ ”

इति विज्ञाप्य 'यत इन्द्रे'त्यादि षड्भि ऋग्भि रक्षां प्रकल्प्य प्रणवेन दिव्यकवाटमाबद्धच

शङ्खचक्रगदामुख्य दिव्यायुधगणस्सदा ।
श्रीशरक्षाविधानाय शक्त्या जाग्रत जाग्रत ॥

इत्यनुसन्धाय प्रणम्य 'गौरीमिमाये'ति यवनिकां प्रसार्य पूजां समापयेत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एवमावाहन नमस्कार प्रत्युत्थान पुष्पाञ्जलि स्वागत नित्यासन पादपीठिका अर्घ्यपाद्य प्रतिग्रहपाद्य प्लोताभिमर्शन चन्दनक्षोदवारि-चरणालेपनमाचमनीयप्रतिग्रहाचमनचन्दनालेपनपुष्पमाल्यधूपदीपमधुपर्कघन -सारनागवल्ली पादुकाप्रदान स्नानासन शाटिका दन्तकाष्ठादर्शजिह्वा-निर्लेखन गण्डूष ताम्बूल वस्त्राभ्यङ्ग मौलिमाला तालवृन्त चन्दनोद्वर्तन-गन्धामलकवारि कङ्कतरजनी स्नानवस्त्र गन्धानुलेपनोत्तरीय पवित्र नृत्तगीत वाद्य सहस्रधारा स्नापन नीराजन शिरःप्लोतोष्णीषप्लोतवस्त्राङ्गाभिमर्शन वस्त्रोप-वीतोत्तरीय पादुकालंकारासनशिरस्त्राण पीतकौशेयापादमस्तककर्पूरालेपन कस्तूरिकामृगमद चन्दनानुलेपन चामरव्यूहवीजन कुङ्कुमालेपन गन्धना-नाविधभूषण ब्रह्मसूत्रोत्तरीय मौलिमालाबाहुमालाश्वेतमृत्तिकोर्ध्वपुण्ड्रधारण श्रीचूर्णधारणाञ्जनधारण पुष्पाञ्जलिप्रदान दर्पण ताम्बूल धूपदीप शालि-तण्डुलादिमात्रादान स्वाध्यायाध्ययन स्वर्णदान नाट्यवेणुगानवीणावादन मङ्गलपाठनीराजन पञ्चपिण्डप्रक्षेपण यात्रासनोपानच्चामरमुक्तातपवारण मयूर पिञ्छव्यजनतालवृन्त रथगजाश्वशिबिकायान वैनतेयध्वज क्रीडायष्टि ताम्बूल क्रीडाफलसमृद्धिभोज्यासन मधुपर्क ताम्बूलपाद्याचमनार्हणाम्भः पायसान्न मुद्गान्न गुडोदन दध्योदन माषोदन तिलोदन मरीच्योदन सर्षपोदन पाद्यपानक पानीय मुखपाणिपादशोधन हस्तशाटिका एलाचन्दन-क्षोदवारिकरशोधन मन्त्रासन चन्दनालेपन माल्यापूपपृथुकसक्तुतिलपिण्ड-फलमथितपानीय नालिकेराम्बुताम्बूल पर्यङ्कासनप्रदक्षिण नमस्कार स्तुत्यात्मनिवेदनार्घ्योद्वासनात्मसमर्पणानि इत्यष्टाविंशत्युत्तरशतोपचारैः तत्त-न्मन्त्रैरष्टधाऽऽवृत्तपुरुषसूक्तऋग्भिः विष्णुगायत्र्या वा 'तद्विष्णो'रि त्यादिभिर्वैष्णवैर्मन्त्रैर्वा पूजां कुर्यात् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

अधोक्तानामुपचारणामेतेष्वन्तर्भावो वेदितव्यः । एतावत्कर्तुमशक्तस्तु आवाहन नमस्कार सपर्यासन पादपीठार्घ्यपाद्याचमनमुखवासताम्बूल पादुका स्नानासन स्नानशाटिका दन्तकाष्ठ जिह्वानिर्लेखन तैलाभ्यञ्जनाङ्ग-मर्दन गन्धामलकस्नानपञ्चगव्यस्नान कङ्कतशोधन रजनीस्नानवस्त्रोत्तरीय-वारिधारासहस्रस्नान नीराजन प्लोतवस्त्राभिमर्शन वासो ब्रह्मसूत्रोत्तरीया-लंकारासनकेशशोपणदुकूलपरिधान गन्धद्रव्यानुलेपन व्यजन भूषण पुष्पमाला नयनाञ्जन ताम्बूल दर्पण धूपदीपमात्रादान वेदवेदाङ्गपठन नीराजन छत्रचामरध्वजोपानद्वाहन शिबिकायानतूर्यवाद्य भोजनासनमधुपर्क-निवेदनाहरण मृष्टान्नादि निवेदन पान पानीय मुख पाणि पादशोधना-चमनीय मन्त्रासनापूपादि निवेश्न ताम्बूलपर्यंकासन तदुचितवस्त्रभूषणादि-दान स्तोत्रपठनानीति चतुरुत्तरषष्ट्युपचारैः पूर्वोक्ततत्तन्मन्त्रैः चतुरावृत्तपुरुष-सूक्तऋग्भिः मूलमन्त्रेण वा भगवन्तमर्चयेत् ।

तत्राशक्तस्तु आवाहनासनार्घ्यपाद्याचमन मुखवास तांबूल पादुका-प्रदान दंतधावन जिह्वानिर्लेखनतैलाभ्यञ्जन धात्रीस्नान हरिद्रास्नान वस्त्रोत्तरीय यज्ञोपवीत गन्धालेपन भूषण मालाञ्जनादर्श धूपदीप यानछत्र चमरतूर्यघोष मधुपर्कार्हण नैवेद्यनिवेदन भक्ष्यवस्तुदान तांबूलदानविसर्जनानीति द्वात्रिंशदुपचारैः पूर्वोक्ततत्तन्मन्त्रैः द्विरावृत्तपुरुषसूक्तऋग्भिर्वा मूलमन्त्रेण वा भगवन्तमर्चयेत् ।

तत्राशक्तस्तु आवाहन आसन अर्घ्यपाद्याचमन स्नानवस्त्र यज्ञोपवीत गन्धालेपन भूषणमाला धूपदीप मधुपर्क नैवेद्यदान विसर्जनानीति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

षोडशोपचारैः पूर्वोक्त तत्तन्मन्त्रैः पुरुषसूक्तऋग्भिर्वामूलमन्त्रेण वा भगवन्त मर्चयेत् ।

तत्राशक्तस्तु अर्घ्यगन्ध पुष्पधूपदीपैरिति पञ्चोपचारै र्मूलमन्त्रेण भगवन्तमर्चयेत् । अर्घ्याद्युपचारषट्केऽपि प्रत्युपचारं मूलमन्त्रजपः कार्यः ।

अर्चन्तस्त्वेत्यर्घ्यजलं, पृथिव्यात्मना नारायणेन सत्यंगन्धं समर्पयामि । हं अकाशात्मना वासुदेवेन ब्रह्मपुष्पं समर्पयामि । यं वाय्वात्मना सङ्कर्षणेन विद्यां धूपं समर्पयामि । रं तेज आत्मना प्रद्युम्नेन ज्ञानदीपं समर्पयामि । वं अब्रात्मनाऽनिरुद्धेन आनन्दं नैवेद्यं समर्पयामि । एवं भगवदाराधनस्य नित्यत्वेन अवश्यकर्तव्यत्वात् सविस्तरमेवाराधनं नित्यं कर्तव्यम् । तत्र सर्वात्मना अशक्तश्चेत् पञ्चोपचारपूजां पुष्पाञ्जलिंवा अवश्यं दद्यात् । एवं नारायणानुवाकेन विष्णुसूक्तेन 'तद्विष्णोरि'तिमन्त्रेण अन्यैश्च भगवन्मन्त्रैः पूजाविधानं द्रष्टव्यम् ।

अष्टाविंशत्युत्तरशतोपचाराराधने, चतुष्षष्ठ्युपचारसहिताराधने च प्रणवादिसर्वमन्त्रजपः कार्यः । द्वात्रिंशत् षोडश पञ्चोपचारसहिताराधनेषु प्रसादमन्त्र, अजपामन्त्र, प्राणप्रतिष्ठामन्त्र सङ्कलीकरणन्यास वैष्णव मातृका न्यास भूतसृष्टिन्यास, अष्टाक्षरादिमन्त्रविस्तारन्यासादीनां निवृत्तिः। श्रीभाष्यकारोक्तनित्यप्रकारेणवान्यासादिकं कुर्यात् ॥

पञ्चोपचारपक्षे मूलमन्त्रस्य ऋषिच्छन्दो देवतां ध्यात्वा ध्यानश्लोकमुक्त्वा यथाशक्ति जपित्वा चतुष्कृत्वोऽष्टकृत्वः पूरककुंभकरेचकार्थं

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मूलमन्त्रं जपन् प्राणानायम्य आराधनं कुर्यात्। पुष्पाञ्जलिपक्षे मन्त्ररत्न जप एव।

एवमावश्यकानावश्यकादिकं बुद्ध्या विचार्य अवश्यं यथाशक्ति भगवत्समाराधनमन्वहं कर्तव्यम्॥

विष्वक्सेन निवेदितमन्नं तत्तत्परिचारकेभ्यो दत्वा जले प्रक्षिपेत्। अथवा तद्गणानुचरो भूत्वा स्वयं भुञ्जीत। अथवा विष्वक्सेनस्य आचार्यान्तर्भूतत्वादाचार्यप्रसादत्वेन स्वीकार्यम्।

ततो वैष्णवहोमं कृत्वा वैश्वदेवबलिहरणं पञ्चमहायज्ञांश्च स्वस्वसूत्रोक्त विधिना कुर्यात्।

## ॥ अथ वैष्णवहोमप्रकारः ॥

औपासनाग्निमुपसमिध्य पूर्वं परिषेकं कृत्वा वन्हौ सपरिवारं भगवन्तं ध्यात्वा अधारशक्त्यादि योगपीठादिदेवानां प्रणवादि चतुर्थ्यन्त-नामभिः स्वाहाकारन्तैर्हुत्वा (सावित्र्यष्टाक्षर द्वादशाक्षर षडक्षर विष्णुगायत्री श्री भूमिनीला मन्त्ररत्नै स्वाहाकारान्तैर्हुत्वा) वसुदेवादि चतुर्व्यूह तद्देवी केशवादि नाम तद्देवी मत्स्यादि दशावतार नाम तद्देवी, स्वाभीष्टार्चावतार नाम तद्देवी नामभिः प्रणवादि चतुर्थ्यन्तयुक्त स्वाहाकारान्तैर्हुत्वा किरीटादि दिव्यभूषण सुदर्शनादि दिव्यायुधानन्तगरुडविष्वक्सेन चण्डादिकुमुदादि नामभिः स्वाहाकांरान्तैः प्रणवादि चतुर्थ्यन्तयुक्तै रन्नेनाज्येन समिद्भिर्वाहुत्वा शक्तिरस्तिचेत् पुरुषसूक्त श्रीसूक्त भूसूक्त'देवीं' वाचमिति वाक्सूक्त

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विष्णुसूक्तैः प्रत्यृचं हुत्वा स्विष्टकृतञ्चहुत्वा उत्तरपरिषेकं कृत्वा वैश्वदेवादिकं कुर्यात् ॥

एवंकर्तुमशक्तश्चेत् 'ओं आधारशक्त्यादि योगपीठान्त देवेभ्यः स्वाहा ! ओं परव्यूहविभवान्तर्याम्यर्चावतारेभ्यः स्वाहा । ओं सच्चिदानन्द-रूप भगवद्दिव्यमङ्गलरूपविग्रहेभ्यः स्वाहा । ओं दिव्यभूषणायुधचिह्नेभ्यः स्वाहा । ओं अनन्तगरुडविष्वक्सेनचण्डादिकुमुदाद्यनन्तपरिजनपरिच्छदसहित अखिलहेयप्रत्यनीकानन्तकल्याणगुण श्रीभूनीलासहित श्रीमन्नारायणाय स्वाहा। अग्नये स्विष्टकृते स्वाहा । उत्तरपरिषेकादि पूर्ववत्कृत्वा वैश्वदेवादिकं कुर्यात् ।

ततो गोदोहनमात्रं अतिथिं प्रतीक्षमाणः पाणिपादौ च प्रक्षाल्य द्विराचामेत् । भोजनशालायां नाचामेत् । भोजनार्थमासने निषण्णे सति यद्यन्योऽभिवादनं कुर्यात्तदा पुनराचामेत् । ततः शुचौ गुप्ते भगवत्सन्निधौ सविताने प्रदेशे प्राङ्मुख इज्याप्रदेशाभिमुखो वोपविश्य हस्तयोः पादयो रास्येचेति पञ्चसुस्थलेषु आर्द्रः मौनमास्थितस्सन् शुचि भोजनस्थानं श्लक्ष्णं गोमयेन ब्राह्मणस्य चतुरश्रं क्षत्रियस्य त्रिकोणं वैश्यस्य वर्तुलं शूद्रस्य अर्धचन्द्राकारमित्येवं प्रकारेण पात्रान्यूनाधिकमुपलिप्य तत्र सुवर्णरजतकांस्य ब्रह्मपत्र जलजपद्मपत्र पलाशपत्र कदलीपत्र पनसाम्रनालिकेर बिल्वपत्राद्यन्यतरं प्रशस्तंपत्रं विशोधितंनिक्षिप्य वैश्वानरब्रह्म ध्यायेत् । 'पुनर्म आत्मा पुनरायु'रित्यृचं मूलमन्त्रं च जपित्वा छान्दोग्योपनिष-दधीतान् 'प्राचीनशाखा औपमन्यव' इत्यादि चतुर्दशखण्डाञ्जपेत् ।

अशक्तश्चेदनन्तापरिच्छिन्नाप्रमेयस्वरूपध्यानार्थं नाभेरुपरि प्रादेश-मात्रविमितं सुतेजो विश्वरुपपृथग्वर्त्मबहुलरयिप्रतिष्ठानामक स्वर्गादित्य


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

वाय्वाकाशजलपृथिवीरूपीमूर्धाचक्षुःप्राणमध्यकायलिंगपादविशिष्टं बर्हिगार्ह-पत्यदक्षिणाग्न्याहवनीयरूपितलोमहृदयमनोविशिष्टं परमात्मानं वैश्वानरं ध्यायामि। पूर्वोक्तपञ्चोपचारमन्त्रैरर्घ्यगन्धपुष्पधूपदीपनैवेद्यैरभ्यर्च्य देहे-ऽप्येवंन्यसेत्।

यथा-स्वशरीरं परमात्मवैश्वानरस्वरूपं ध्यात्वा मूर्ध्नि ओं सुतेज-स्संज्ञस्वर्गाय नमः। नेत्रयोः ओं विश्वरूपाह्वय आदित्याय नमः। नासि-कयोः पृथक्वर्त्माख्यवायवे नमः। कण्ठादारभ्य नाभिपर्यन्तं ओं बहुल-संज्ञकाकाशाय नमः इति व्यापकत्वेनन्यसेत्। गुह्ये ओं रयिसंज्ञकजलाय नमः। पादयोः ओं प्रतिष्ठासंज्ञक पृथिव्यै नमः। शिरःप्रभृति पादपर्य-न्तस्थरोमसु व्यापकत्वेनहस्ताभ्याम् ओं बर्हिर्भ्यां नमः। हृदये ओं गार्हपत्याय नमः। मनसि ओं अन्वाहार्य पचनाय नमः। वक्त्रे ओं आहवनीयाय नमः। इति विन्यस्य अन्नं पात्रे दर्व्या निधापयेत्, न तु हस्तेन। 'अन्नपतेऽन्नस्य नो देही'त्यृचा 'भूरन्नमग्नये पृथिव्यै स्वाहे'त्यनुवाकेन मूलमन्त्रेण अन्नाय नमः अन्नदाय नमः अन्नपतये नमः इति प्रणमेत्।

ततः पादाग्राभ्यां पादाग्रेणवा भूमिं स्पृशन् महाव्याहृतीभिरन्नयुक्तं तत्पात्रं प्रदक्षिणं परिषिच्य अन्नमाज्येनाभिघार्य 'अहमस्मी'त्यन्नसूक्तं "यो ब्रह्मे"ति घृतसूक्त'मायुर्दा अग्न' इत्यृचं वा 'शुक्रमसि ज्योतिरसि तेजोऽसी'ति यजुर्वा 'उरुविष्णो विक्रमस्वे'त्यृचं वा घृतमन्नञ्च स्पृशन् जपित्वा 'सत्यन्त्वर्तेने-त्यन्नं परिषिच्य मूलमन्त्रेणाभिमन्त्र्य आभोजनान्तं तर्जनीमध्यमाङ्गुष्ठैः पात्रं स्पृशन्न'मृतोपस्तरणमसीति' भगवद्दिव्यपादपद्मसलिलं पीत्वा ओं अनन्ता-परिच्छिन्नाप्रमेयस्वरूपाय ध्यानार्थं नाभेरुपरि प्रादेशमात्रविमिताय सुतेजो

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

विश्वरूप पृथग्वर्त्म बहुल रयिप्रतिष्ठानामक स्वर्गादित्यवाय्वाकाशजल-पृथिवीरूप मूर्धाचक्षुः प्राणमध्यकायलिङ्ग पादविशिष्टाय बर्हिर्गार्हपत्यदक्षिणाग्न्याहवनीयरूपित लोम हृदय मनो वदन विशिष्टाय परमात्मने वैश्वानराय स्वाहा । यद्वा सुतेजःप्रभृतिनामक द्युमूर्धत्वादिविशिष्टपरमात्मने वैश्वानराय स्वाहा ।

"अहंवैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

इति श्लोकं जपेत् । 'प्रणेनिविष्टोऽमृतं जुहोमि प्राणाय स्वाहा' इत्यादि पञ्चभिर्मन्त्रैः मध्यमानामिकाङ्गुष्ठैः गृहीतेनान्नेन दशनस्पृष्टिरहिताः पञ्च-प्राणाहुतीर्भगवन्तं ध्यायन् हुत्वा शेषमन्नं व्यञ्जनैर्युतं यथाक्रमं भुञ्जीत न पात्रम्मुञ्चेत् । प्राणाहुत्यनन्तरं मुञ्चेद्वा । अत्र प्रतिकबलं गोविन्दं कीर्तयेत् ।

भगवन्निवेदितेनैव प्राणाहुतीः कृत्वा विष्वक्सेनप्रमुखाचार्यनिवेदितं वैश्वदेवशिष्टं च भगवन्निवेदितेन सहैव भुञ्जीत । उच्छिष्टे घृतसेचनं न दद्यात् । प्राणाहुतेः पूर्वं लवणान्वितव्यञ्जनादिकं न दद्यात् । दक्षिणपार्श्वे आपोशनं कुर्यात् । वामे न कुर्यात् । आपोशनार्थजले पूरिते पुनर्नपूरयेत् । आपोशनार्थं स्वयमेव करे जलं न दद्यात् । करे आपोशने दत्ते आशीर्वादं न कुर्यात् । तं प्रत्यपिस्वस्तिवाचनं न कुर्युः । परिषेचन शिष्टकरस्थितमम्बु न पिबेत् । परिषेचनकाले हस्तेन अन्नं न लङ्घयेत् । हस्तेन लङ्घितमन्नं न भुञ्जीत । उत्तरापोशनं कृत्वा न भुञ्जीत ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

उत्तरापोशनात्पूर्वं नोत्तिष्ठेत्। पीतावशिष्टजलं न पिबेत्। यदि पिबेत् भूमौ किञ्चिद्विनिस्स्राव्य पिबेत्। पानकाले पानीयपात्रं यावद्भूमौ न निक्षिपेत् तावत्तत्पानीयमनुच्छिष्टं भवेत्। आस्येन वामहस्तेन शय्यायां अन्यकरेण तिष्ठन् वा पाणिनखस्पृष्टं तोयं न पिबेत्। नायमापदि। भोजनकाले वामहस्तेन जलपात्रमुद्धृत्य जलं पिबेत्। दक्षिणं पाणिं न संयुज्यात्। हस्तेन जलं न पिबेत् जलंपिबतः भोजन भाजने तोये पतिते तदन्नं न भुञ्जीत। पानपात्रं दक्षिणपार्श्वे निदध्यात्। न तु वामे। नालिकेरोदकं कांस्यपात्रे, घृतव्यतिरिक्तं गव्यं मधु च ताम्रपात्रे च न पिबेत्। जलादिकं शब्देन न पिबेत्। न भुञ्जीत असद्वाचाक्रन्दनं, क्रोधमन्यचिन्तनं शिशूनां भर्त्सनं श्वचण्डालादि दर्शनंकुर्वन्। स्त्रीषु पश्यत्सु न भुञ्जीत। शुचिषु अनश्नत्सु च पश्यत्सु न भुञ्जीत। यदि पतितादिषु पश्यत्सु भुञ्जीत तदा स्नात्वा मानस्तोकेत्यृचं जपेत्। भिषग्वार्घ्युषिकदेवलकशूद्रादीनामन्नं न भुञ्जीत। भुञ्जानोऽन्यं स्पृशेच्चेत्तदन्नं न भुञ्जीत। इत्यादिविधिनिषेधपरामर्शपूर्वकं शास्त्रोक्तनियमयुक्तस्सन् भोजनंकृत्वा 'अमृतापिधानमसी'ति भगवद्दिव्यपादजलं पीत्वा शिष्टजलं

> रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम्।
> अर्थिनामुदकं दत्तं अक्षय्यमुपतिष्ठतु ॥

इणि मन्त्रेण भूमौ त्यजेत्। उत्तरापोशनार्थं पूर्वं हस्तं न प्रक्षालयेत्। ततः उत्थाय गृहाङ्गणं गत्वा शूद्रादीनपश्यन्नस्पृशन्नासीनः वामपार्श्वे षोडशगण्डूषान् विसृजेत्। न तिष्ठन् गण्डूषान् कुर्यात्। गण्डूषकाले-मुखस्थं जलं न पिबेत्। भुक्तिपात्रे तूद्धृते मण्डलशोधने च कृते

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

प्राङ्मुख उदङ्मुखो वा आसने स्थित्वा द्विराचम्य स्वस्थः प्रशान्तचित्तोऽभीष्टदेवतास्मरणं कृत्वा 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशस्सर्वस्यजगतः प्रभुः प्रीणाति विश्वभुक्' इत्याचमनशिष्टं हस्तजलं दक्षिणपादाङ्गुष्ठे निस्स्राव्य 'श्रद्धायां प्राणेनिविश्यामृतंहुत'मिति हुतानुमन्त्रणं कृत्वा 'ओं ब्रह्मणि म आत्माऽमृतत्वाये'ति स्वात्मानं ब्रह्मणियोजयेत्। 'प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकस्तेनान्नेनाप्यायस्वे'ति नाभिदेशं विमृश्य आदित्यमीक्षेत इति।

"आगस्तिरग्निर्बडबानलश्च भुक्तं मयाऽन्नं जरयत्वशेषं।
सुखञ्च मेतत्परिणामसंभवं यच्छत्वरोगं मम चास्तु देहे॥

विष्णुरत्तातथैवान्नं परिणामश्च वै यतः।
सत्येन तेन मे भुक्तं जीर्यत्वन्नमिदं तथा"॥

इत्युच्चार्य स्वहस्तेनोदरं परिमृश्य श्रीवैष्णवानांताम्बूलं दत्वा स्वयमपि ताम्बूलचर्वणं कुर्यात्।

मुखे पूर्वं पर्णं निधाय पश्चात्क्रमुकं निदध्यात्। पर्णमूलं पर्णाग्रं सीरां चूर्णपर्णं च वर्जयेत्। भुक्त्वाऽऽर्द्रपादोऽगाराद्बहिर्न व्रजेत्।

ततः पाणिपादौ प्रक्षाल्याचम्य प्रयतो भगवन्मंदिरंगत्वा प्रणम्य भगवानेव स्वशेषभूतेनमया स्वकीयैरेव देहेन्द्रियान्तःकरणैः स्वकीय कल्याणतमद्रव्यमयान् औपचारिकसांस्पर्शिकाभ्यवहारिकादि समस्त भोगानति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पियतमानतिप्रभूतानतिसमभ्रानत्यन्तभक्तिकृतानखिलपरिजनपरिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादितवानित्यनुसन्धाय ओं कृतञ्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्यभगवद्वासुदेवपादारविन्दार्चनेन इज्यया भगवत्कर्मणा भगवान् प्रीयतां वासुदेव इति इज्यां भगव ते समर्पयेत् ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्य शतक्रतु चतुर्वेदि श्रीनिवासाचार्यविरचिते पञ्चकालक्रियादीपे इज्यानिरूपणाख्यस्तृतीयः परिच्छेदः

**

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## अथ स्वाध्यायः

### अथ स्वाध्यायं व्याख्यास्यामः

---

अह्नश्चतुर्थकाले संप्राप्ते 'ओं कृतञ्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्य भगवद्वासुदेवपादारविन्दार्चनेन स्वाध्यायेन भगवत्कर्मणा भगवन्तमर्चयिष्यामीति स्वाध्यायं सङ्कल्प्य ओं भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवन्तं वासुदेवमर्चयिष्यामीत्यनुसन्धाय स्वावगतवेदवाक्यार्थव्यक्तीकरणाय विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृत परावरतत्त्वयाथार्थ्यानां मनुपराशरपाराशर्यशुकशौनकादीनां महर्षीणां प्रबन्धान् श्रवणमननजपादिभिरभ्यसेत्।

उपबृह्मनिरपेक्षस्य उपबृंहणीयवेदभागजप एव युक्तः! तत्रापि साक्षाद्भगवत्प्रतिपादक एव भागो जप्यः। सङ्ग्रहरुचीनां महामन्त्रशक्तानां च सर्वसारभूतव्यापकमन्त्रजप एव युक्तः। शिष्यगुरुसब्रह्मचारिश्रेयोऽर्थिभिरनसूयिभिर्वीतरागैस्सह तत्त्वनिर्णयाय वादः स्वाध्यायकालएवप्रवर्तनीयः। तदिह भगवत्प्रीणन स्वचित्तरञ्जकेतिहासपुराणस्तोत्रनिगमान्तद्वय व्यापकादीनां श्रवणमननप्रवचनजपादयो वा संवादादयश्च यौगिकज्ञान प्रदीपस्नेहायमाना विविधवाचिकपापोदयप्रतिबन्धिनश्च सर्वेव्यापाराः यथाधिकारं यथासंभवं यथाविधि संभूय पृथग्भूय वा अनुष्ठेयाभवन्ति। शमाद्युपयुक्तशब्द परिशीलनंकुर्यादिति स्वाध्याय सारः॥

अथ बन्धुजन कार्यमात्मकार्यं गृहक्षेत्रादिचिन्तां च कृत्वा लोहितायति भास्करे ग्रामाद्बहिर्नदीतटाकादितीरं गतश्शुचिर्दर्भपाणिः

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पाणीपादौ च प्रक्षाल्य प्राङ्मुखः प्रत्यङ्मुखोवा शुचौदेशे निषण्ण स्स्वाचान्तः सायंसन्ध्यामुपासिष्ये इति सङ्कल्प्य आपोहिष्ठादिभिर्मार्जयित्वा 'अग्निश्चमामन्युश्चे'त्यपः पीत्वाऽऽचम्य सुरभिमत्या आपोहिष्ठीयाभिः 'हिरण्यवर्णाश्शुचयः' 'पवमानस्सुवर्जनः' इत्यनुवाकाभ्यां च मार्जयित्वा अर्धास्तमितेरवौ प्रत्यङ्मुखस्तिष्ठन्नासीनो वा प्रणवव्याहृतिगायत्रीभिरभि मन्त्रितमुदकमूर्ध्वं त्रिरुत्क्षिप्य प्रायश्चित्तार्घ्यञ्च दत्वा प्रदक्षिणीकृत्य प्रणव-व्याहृतीभिः परिषिच्य असावादित्यो ब्रह्मे ति ध्यायन्नात्मानमुपलभ्य उपविश्य-द्विराचम्य केशवादीन् तर्पयित्वाऽऽचम्य भगवन्तं विष्णुं ध्यायन् गायत्रीं पूर्ववज्जप्त्वोपस्थाय 'इमं मे वरुणे'त्यादिभिः पञ्चभिरृग्भिर्नारायणो-पनिषदाच वारुणीं सन्ध्यामुपस्थाय सर्वमन्यत् यथापूर्वं कुर्यात् ।

ततो भगवदर्चनं पूर्ववद्यथाशक्तिकृत्वा वैश्वदेवबलिहरणमतिथिपूजाञ्च यथाशक्तिकृत्वा भोजनञ्चपूर्ववत्कुर्यात् । 'ऋतं त्वा सत्येन परिषिञ्चामी'ति परिषेचन मन्त्र भेदः । केनचिन्निमित्तेन विलुप्तेऽपि भोजने प्राणाग्निहोत्र-मन्त्रजपं कुर्यात् । ततश्च रात्रियोग्यस्वाध्यायं यथाशक्ति कुर्यात् ॥

ननु 'प्रदोषे च भुक्त्वा प्रोदकयोश्च पाण्योर्नाधीयत' इत्यापस्तम्ब-वचनात् रात्रौ भुक्त्वा नाधीयीत, अधीत्यैव भुञ्जीत इत्यर्थो लभ्यते । तत्कथं भोजनानन्तरमध्ययनमुच्यते इति चेत्, अत्रोत्तरम् प्रदोषे त्रयोदश्यादि प्रदोषे नाधीयीत, भुक्त्वा प्रोदकयोश्च पाण्योर्नाधीयीत इत्ये वार्थ इति । भुक्त्वाऽऽर्द्रपाणिः अम्भोऽन्तरिति याज्ञवल्क्यादिवचनं भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीतेति विज्ञानेश्वरेण व्याख्यातम् । 'नभुक्तमात्रे

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

नाजीर्णे न वमित्वा नसूतके' इति मनुवचनं भोजनानन्तरं आर्द्रपाणि-र्नाधीयीतेति कविवल्लभेन व्याख्यातम् । भुक्त्वा आर्द्रपाणिरित्युक्तेः अभुक्त्वा आर्द्रपाणिरपि अधीयीतेति न्यायविदो वदन्ति ।

मितसन्ध्यस्त्रयोदश्यां संस्मरन्नात्मनो हितम् ।
अन्होऽष्टांशेनसंयुक्तं रात्र्यर्धं मौनमाचरेत्' ॥

इति स्मृत्यर्णवे त्रयोदश्यां तत्कालनियतसावित्रीहोमादिव्यतिरिक्तदशायां प्रदोषाख्यकाले मौनविधानात् मन्त्रादिकमपि वर्जनीयम् । त्रिप्त्रयनादिषु तु स्वाध्यायजपमन्त्रं निषिध्यते । मन्त्रजपादिकंतु विधीयते । एवं गुरो-स्समारभ्य मन्त्रानुष्ठानमाचरेत् ।

'अष्टाक्षरं जपेद्विद्वानष्टसहस्रकं' इति बोधायनेन अष्टाक्षरजपस्य नित्यत्वमुक्तम् ।

ततो भगवन्मन्दिरं गत्वा प्रणम्य ओं कृतञ्चकरिष्यामि भगव-न्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्यभगवद्वासुदेवपादारविन्दार्चनेन स्वाध्यायेन भगवतःकर्मणा भगवान् प्रीयतां वासुदेव इति स्वाध्यायं भगवते समर्पयेत् ॥

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्य शतक्रतुचतुर्वेदि श्रीनिवासाचार्यविरचिते पञ्चकालक्रियादीपे स्वाध्यायनिरूप-णाख्यश्चतुर्थः परिच्छेदः ॥

**



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# अथ योगः

## अथ योगं व्याख्यास्यामः

---

अर्धरात्रे समुत्थाय जितनिद्रो जितेन्द्रियो जितश्रमः पाणिपादौ च प्रक्षाल्य द्विराचम्य भगवन्मन्दिरं गत्वा गुरुं भगवन्तं च प्रणम्य भगवत्सन्निधौ अन्यत्र वा विविक्ते शुचौदेशे कम्बलाद्यासने संविश्य ओं कृतश्चकरिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूतिचातुरात्म्यभगवद्वासुदेवपादारविन्दार्चनेन योगेन भगवतःकर्मणा भगवन्तमर्चयिष्यामीति योगं सङ्कल्प्य ओं भगवतोबलेन भगवतोवीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवन्तं वासुदेवमर्चयिष्यामीत्यनुसंधाय स्वस्तिक गोमुख पद्म वीरसिंम्ह भद्रमुख मयूराख्येषु आसनेषु स्वाभिमतेन केनचिदासनेन स्थित्वा पूर्वोक्तप्रकारेण भूतशुद्धिं कृत्वा प्राङ्मुखः कायशिरोग्रीवासन्धिवक्षस्स्थलानि समानिकृत्वा अक्षिणी नासाग्रन्यस्ते कृत्वा तालुतलस्थां जिह्वां सान्तरे दशनावली च कृत्वा ओष्ठपुटावीपल्लभौ कृत्वा ऊरुमध्यप्रदेशयोर्बाहुकूर्परौ धृत्वा दक्षिणेत्तरौ पाणीकृत्वा योगपट्टेन विग्रहमचलं सन्धार्य अपानदेशन्निरुद्धच्य विषयान्तर्निविष्टं मनस्समाहृत्य बुद्धौ लीनं कृत्वा बुद्धिं स्वगोचरां कृत्वा

आत्मनात्मानं समाधाय पूर्वोक्तप्रकारेण मूलमन्त्रेण द्वादशाक्षरविद्ययावा प्राणायामं कुर्वन् कुंभकसमये

ध्यायामि परमात्मानं परमानन्दविग्रहम् ।
गुरूपदेशतो ज्ञेयं पुरुषंकृष्णपिङ्गलम् ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ब्रह्मब्रह्मपदेचास्मिन् दहराब्जखमध्यमे ।

इति ध्यात्वा स्वात्मशरीरकं परमात्मानं भावयेत् ।

यद्वा - हृत्पद्माष्टदलोपेते कन्दमध्यात्समुत्थिते ।
द्वादशाङ्गुलनालेऽस्मिन् चतुरङ्गुलवन्मुखे ॥

प्राणायामे विकसिते केसरान्वितकर्णिके ।
वासुदेवं जगन्नाथं नारायणमजं हरिम् ॥

चतुर्भुजमुदाराङ्गं शङ्खचक्रगदाधरम् ।
किरीटकेयूरधरं पद्मपत्रनिभेक्षणम् ॥

श्रीवत्सवक्षस्संयुक्तं पूर्णचन्द्रनिभाननम् ।
पद्मोदरदलाभासं सुप्रसन्नं शुचिस्मितम् ॥

शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
पद्मच्छवि पदद्वन्द्वं परमात्मानमीश्वरम् ॥

प्रभाभिर्भासितंरूपं परितः पुरुषोत्तमम् ।
ध्यायामिमनसा देवं सर्वभूतहृदि स्थितम् ॥

इति भगवन्नारायणं ध्यात्वा स्वात्मशरीरकं परमात्मानं भावयेत् । यद्वा वैश्वानरसंज्ञकं भगवन्तं नारायणं ध्यात्वा स्वात्मशरीरकं परमात्मानं भावयेत् ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यद्वा

आत्मानं सर्वजगतः पुरुषं हेमरूपिणम् ।
हिरण्यश्मश्रुकेशं च हिरण्मयनखं हरिम् ॥

कप्यासांबुजवद्वक्त्रं सृष्टिस्थित्यन्तकारणम् ।
पद्मासनस्थितं सौम्यं प्रबुद्धाब्जनिभाननम् ॥

पद्मोदरदलाभाक्षं सर्वलोकाभयप्रदम् ।
विजानन्तं हितान्सर्वान् उन्नमन्तश्च धार्मिकात् ॥

शासयन्तं जगत्सर्वं ध्यायेल्लौकिकसाक्षिणम् ।

इति भगवन्तं नारायणं आदित्यमण्डलमध्यवर्तिनं ध्यात्वा स्वस्य परमात्मनश्च शरीरशरीरिभावादिसंबन्धं भावयेत् ।

यद्वा

भ्रुवोर्मध्येऽन्तरात्मानं भारूपं सर्वकारणम् ।
स्थाणुवन्मूर्धपर्यन्तं मध्यदेहात्समुत्थितम् ॥

जगत्कारणमव्यक्तं ज्वलन्तममितौजसम् ।

इति ध्यात्वा स्वस्य परमात्मनश्च शरीरशरीरिभावादिसंबन्धं भावयेत् ।

यद्वा -

हृन्मध्येऽष्टदलोपेते कर्णिकाकेसरान्विते ।
उन्निद्रहृदयाम्भोजे सोममण्डलमध्यमे ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

स्वात्मानं भास्वराकारं भोक्तृरूपिणमक्षयम् ।
सुधारसं विमुञ्चद्भिः शशिरश्मिभिरावृतम् ॥

षोडशच्छन्दसंयुक्ताच्छिरःपद्मादधोमुखात् ।
निर्गतामृतधाराभिः समग्राभिस्समन्ततः ॥

प्लावितं पुरुषं तत्र चिन्तयामि समाहितः ।
तेनामृतरसात्क्लिन्न साङ्गोपाङ्गकलेबरम् ॥

अहमेव परंब्रह्म परमात्माऽहमव्ययः ।

इति भावयेत् ।

यद्वा ततश्च प्रत्यहं आत्मोपजीवनायैवमनुसरेदिति श्रीवैकुण्ठ गद्योक्तप्रकारेण भावयेत् ।

यद्वा - परव्यूहविभवाद्यर्चावतारेषु स्वाभीष्टस्य भगवदवतारस्य मूर्तिध्यानं तत्तन्मन्त्रैः कृत्वा अशेषचिदचिद्वस्तुशेषिभूतस्य अखिल-जगदाधारस्य समस्तजगत्सृष्टिस्थितिसंहारान्तःप्रवेशनियमनादिलीलस्य अखिलहेयप्रत्यनीककल्याणैकतानस्य इतरसमस्तवस्तुविलक्षण अनन्त-ज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयज्ञानबलैश्वर्यशक्ति तेज-स्सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यगाम्भीर्यौदार्यस्थैर्य - शौर्यपराक्रमसत्यकामसत्यसङ्कल्प कृतित्व कृतज्ञताद्यसंख्येयकल्पाणगुण गणौघमहार्णवस्य श्रियःपतेर्भगवतो नारायणस्य अनन्यार्हनिरुपाधिकशेषभूतः देहेन्द्रियादिव्यतिरिक्तः ज्ञानैकस्वरूपः स्वयंप्रकाशः चेतनोऽहमर्थः प्रतिक्षेत्र

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भिन्नोऽणुर्नित्यनिर्मलो ज्ञातृत्व कर्तृत्वभोक्तृत्वादिधर्मवान् बद्धोऽयं जीवो नित्यमुक्ततुल्यतया भगवदनुभवयोग्योऽपि अनाद्यविद्याकर्मवासनारुचिप्रकृति संबन्धेन तिरोहितस्वस्वरूपः संसरमाणाध्यात्मिकादितापत्रयेण पीडितो भवति।

तत्र आध्यात्मिकस्तापो द्विविधः। शारीरो मानसश्चेति। शारीरो नाम शिरोरोग प्रतिश्याय ज्वर शूल भगन्दरगुल्माश्वयथु श्वासकासाक्षिरोगातिसार कुष्ठादि व्यादयः।

मानसस्तापो नाम - कामक्रोधलोभमोहमदमात्सर्यभयद्वेष शोकासूयादिराधिः। आधिभौतिको नाम मृगपक्षिमनुष्यपिशाचोरग राक्षससरीसृपादिजनिता पीडा। आधिदैविको नाम शीतोष्णवातवर्षांबु वैद्युतादि जनितस्तापः। एवं तापत्रयपीडितस्सन् गर्भजन्मजराज्ञानमृत्युनरकजं दुःखमनुभवति। गर्भेतावत् बहुमलावृते उल्बसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहति-रत्यम्लकटुतीक्ष्णोष्णलवणरूपैरतितापिभिर्मातृभोजनै र्वर्धमानातिसंवेदनोऽङ्गानां प्रसारणाकुञ्चनादावप्यशक्तश्शकृन्मूत्रमहापङ्कशायी संपिण्डितसर्वगात्रः दुस्सह गर्भवसक्लेशाननुभवति। ततो जायमानः पुरीषासृङ्मूत्रशुक्ला-विलाननः प्राजापत्य वायुना पीड्यमानः अधोमुखतया परिवर्तितः प्रसूति-मारुतबलाद्योनियन्त्रपीडितोऽतिदुःखितस्सन् अशुचिप्रस्तरेनिपतति। ततो मूर्च्छामवाप्य ब्राह्मवयुना संस्पृष्टो भगवन्माययाऽपहृतज्ञानो भवति। ततः कण्डूयने परिवर्तने चाप्यशक्तोऽशुचिः प्रस्तरे सुप्तः कीटदंशादिभि-र्भक्ष्यमाणो तेषां निवारणेऽप्यसमर्थःकिमपिकार्याकार्यमजानन् पशुसमो भूत्वा शिश्नोदरपरायणः नरकहेतुभूतानि पापनि कर्माणि कुरुते।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ततो जराजर्झरदेहश्शिथिलावयवः विचलच्छीर्णदशनावलिसिनायुसिरावृतो दूरं प्रणष्टनयनश्शलद्वपुः प्रकटीभूतसर्वास्थिरल्पाहारोऽल्पचेष्टितो मन्दीभवच्छ्रोत्रनेत्रःस्रवल्लालाविलाननः तत्क्षणेऽप्यनुभूतानां वस्तूनामप्यस्मर्ता सकृदुच्चरितेऽपि वाक्ये समुद्भूतमहाश्रमवासकासमहायाससमुद्भूतप्रजागरो भृत्यादिपुत्रदाराणामवमानबहिष्कृतः प्रक्षीणाखिलशौचः विहाराहारनिस्पृहः परिजनस्यापिहास्यो निर्विण्णाशेषबाडबोऽन्यस्मिन् जन्मनि अनुभूतमिव आत्मनि चेष्टितं संस्मरन् अतितापितो भवति ।

ततो मरणदशायां श्लथग्रीवाङ्घ्रिहस्तः वेपथुनाव्याप्तः मुहुर्ग्लानिपरवेशः मुहुर्ज्ञानलवान्वितः हिरण्यधान्यतनयभार्याभृत्यगृहादिषु एते कथं भविष्यन्तीति अतीव ममताकुलः ।

मर्मभिन्महारोगैश्छिद्यमानसुबन्धनः
परिवर्तमानताराक्षः हस्तपादौ मुहुःक्षिपन् ॥

संशुष्यमाणताल्वोष्ठपुटः दोषौघैर्निरुद्धकण्ठः

उदानश्वासपीडितः तृषाक्षुधाच पीडितः महता तापेन व्याप्तो यमकिङ्करपीडितः 'एकोत्तरशतं मृत्युमथर्वाणः प्रचक्षते' इत्युक्तप्रकारेण मरणवेदनामनुभूय क्लेशादुत्क्रान्ति प्राप्य यातनदेहं प्रतिपद्यते ! ततो नरके यमकिङ्करैः पीडितो नानाविधां दुःखपद्धतिमनुभवति ।

यस्तु यज्ञादीनि पुण्यकर्माणि कुरुते स ऐहिकं सुखमनुभूय स्वर्गसुखानुभवार्थं गमिष्यन् स्थूलशरीरात् सूक्ष्मशरीरं प्राप्य

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

एकशतसंख्याकेषु नाडीभेदेषु ब्रह्मनाडीभेदेन निष्क्रम्य धूमरान्यूपरपक्ष दक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण स्वर्गं प्राप्य इन्द्रादि शरीरं प्राप्य तत्तत्सुकृतानुगुणं कञ्चित्कालमनुभूय

अन्तवत्तु फलं तेषां प्रभवत्यल्पमेधसाम् ।
आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ॥

प्राणिनः कर्मजनित संसारवशवर्तिनः ।

इत्युक्तप्रकारेण कर्मशेषानुभवार्थं पुनर्जन्मादि प्राप्त्यर्थं देवशरीरं विहाय भूतसूक्ष्मशरीरं प्राप्य चन्द्राकाशवायुधूमाभ्रमेघवृष्टिव्रीह-यादिमार्गेणावरुह्य-नरकतुल्यपुरुषशरीरे प्रविश्य रेतसासहस्त्रीशरीरशोणितगर्ते सलिलबुद्बुदा-द्यवस्थां प्राप्य दुस्सहगर्भवासक्लेशमनुभवति । पुनर्जायते म्रियते चेत्येवं पुण्यपापानुरूपेण सुखं दुःखञ्चानुभवन् चक्रपरिवृत्या परिभ्रमति । एवमह-मप्यनादिकालमारभ्य संसरमाणो यादृच्छिक सुकृतपरिपाकेन जायमानकाले भगवत्कटाक्षविषयीभूतः सदाचार्योपदेशाल्लब्धप्रज्ञः पूर्वानुभूतसुकृतदुष्कृत फलमनुस्मृत्य निर्विण्णोऽभूवम् । ततो भगवति स्वरक्षाभरन्यासं साङ्गमनुष्ठित-वानस्मि । एवं भगवति न्यस्तभरस्य द्विषत्सु दुष्कृतं सुहृत्सु सुकृतञ्च मम एतद्देहावसाने केवलं भगवद्दयया अतिप्रवृद्धस्य भगवन्तमेवावलोकयतः प्रच्युत पूर्वसंस्कारमनोरथस्य मम वाक्पाणिपादपायूपस्थाख्येषु कर्मेन्द्रियेषु घ्राणरसनचक्षुस्त्वक्छ्रोत्राख्येषु ज्ञानेन्द्रियेषु च मनसा संयुक्तेषु सत्सु, कर्मज्ञानेन्द्रियसंयुक्ते मनसि प्राणवायुना संयुक्ते सति, एकादशेन्द्रियसंयुक्त-प्राणवायौ जीवात्मना मया संयुक्ते सति प्राणेन्द्रियसंयुक्तस्य मम त्रिस्थूण

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

क्षोभदशायां स्थूलदेहं विहाय पञ्चभूतसूक्ष्मशरीरं प्राप्तस्य तदनन्तरमिन्द्रिय प्राणभूतसूक्ष्मसंयुक्तस्य मम निसर्गसुहृदि हार्दे परमात्मनि श्रमापनयनं प्राप्तस्य अनन्तरं एकशतसंख्याकेषु नाडीभेदेषु धूमरात्र्यपरपक्ष दक्षिणायन षण्मास-पितृलोकाकाशचन्द्ररूपस्वर्गमार्गस्य देवयानपितृयानोभयव्यतिरिक्तनरकमार्गस्य द्वारभूतान् शतसंख्यान्नाडीविशेषान्नप्राप्यैव अर्चिरादिमार्गमुखभूतया मूर्धन्यया शताधिकया ब्रह्मनाड्या निष्क्रम्य सूर्यमण्डलं भित्वा तदुपर्यर्चिरादि-मार्गेण अर्चिरहःपूर्वपक्षोत्तरायणसंवत्सरवाय्वादित्यचन्द्रवैद्युतवरुणेन्द्रप्रजापति-संज्ञैरतिवाहिकैस्तत्तत्सीमापर्यन्तमनुव्रजद्भिस्तत्तल्लोकेषु भगवच्छास्त्रोक्त भोगानु-भवपूर्वकं सबहुमानं नीतस्य मम

लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्य संयुतम् ।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥

नित्यसिद्धैस्समाकीर्णं तन्मयैः पाञ्चकालिकैः ।
सभाप्रसादसंयुक्तं वनैश्चोपवनैश्शुभम् ॥

वापीकूपतटाकैश्च वृक्षषण्डैश्च मण्डितम् ।
अप्राकृतं सुरैर्वन्द्यं अयुतार्क समप्रभम् ॥

प्रकृष्टसत्वराशितं कदाद्रक्ष्यामि चक्षुषा ।

इत्युक्तप्रकारेण बहुकालं द्रष्टुमभिलषितं श्रीवैकुण्ठलोकं प्राप्य कर्मफल भोगार्थं गत्यर्थमेव विद्यया स्थापितमेतावन्तंकालमनुवृत्तं सूक्ष्मशरीरं विहाय विरजां मनसातीर्त्वा अप्राकृतं शुद्धसत्वमयं दिव्यं शरीरंलब्ध्वा ऐरंमदसरस्तीरे सोमसवनसंज्ञाश्वत्थसमीपं गत्वा मालाञ्जनचूर्णवासो


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

भूषणहस्ताभिः पञ्चशतसंख्याभिः प्रत्युत्थिताभिरप्सरोभिः ब्रह्मालंकारैरलंकृतस्य ब्रह्मगन्धरसतेजांसि प्राप्तस्य विष्वक्सेनादिभिर्नित्यैः परांकुशपरकालादिभिरस्मदाचार्यैर्मुक्तैश्च प्रत्युत्थितस्य मम गोपुरसमीपं प्राप्य इन्द्रप्रजापतिसंज्ञौ द्वारपालौ दृष्ट्वा अप्राकृतान् राजोपचारान् प्राप्य आनन्दमयमण्टपरत्नं प्रविश्य नित्यमुक्तविराजितां दिव्यां सभां प्रणम्य नित्यैर्मुक्तैस्सेव्यमानं शेषभोगे श्रिया सहासीनं निरतिशयभोग्यं भगवन्तं श्रीमन्नारायणं दृष्ट्वा तच्चरणारविन्दयुगलं प्रणम्योत्थाय पुनः पुनः प्रणम्य भगवत्समानभोगलक्षणं सायुज्यं प्राप्य स्वसमानजातीयनित्यमुक्तान्तर्भूतस्य मम समस्तप्रतिबन्धकनिवृत्तिपूर्वकमपहतपाप्मत्वादिस्वस्वरूपाविर्भावपूर्वकं देशकालावसरसंकोचरहिततया यावदात्मभावितया पारमार्थिकभगवच्चरणारविन्दयुगलैकान्तिकात्यन्तिकपरभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदतमानन्यप्रयोजनानवधिकातिशयभगवदनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यं भगवान् श्रीमन्नारायण एव प्रापय्य मां रक्षतु इत्यनुसंधाय स्वात्मशारीरकपरमात्मानं ध्यायन्नासीत । अयमेव ज्यायान् पक्षः । एवं जपन् ध्यानान्वितेन योगेन सर्वमभ्यस्तं मन्त्रजातं यावत् भगन्नाराणः पूर्वोक्ते तत्तत्स्थाने सम्यगाभाति तावदधीत्य आत्मना आत्मानं समाधाय जपक्रियाम्मुक्त्वा ध्यातृध्येयाविभागेन तन्मयतां यावदापद्यते तावद्भावयित्वा ध्यानासने त्यक्त्वा रात्रिक्षयावधि शयने समासीत ।

ततश्च

ईदृशः परमात्माऽयं प्रत्यगात्माऽयमिदृशः ।
तत्संबन्धानुसन्धानं इति योगः प्रकीर्तितः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

योगोनमेन्द्रियैर्वश्यैः बुद्धिर्ब्रह्मणिसंस्थितिः ।
प्रयुक्तैरप्रयुक्तैर्वा भगवत्कर्मविस्तरे ॥

इति शाण्डिल्य स्मृत्युक्त एव योगो नित्यमनुष्ठेयः । न तु साक्षात्भगवत्प्राप्ति-साधनत्वेन विहितः भक्तिशब्दवाच्यो योगो नित्यमनुष्ठेय इति सर्वं समञ्जसम् ।

ओं कृतञ्च करिष्यामि भगवन्नित्येन भगवत्प्रीत्यर्थेन महाविभूति-चातुरात्म्यभगवद्वासुदेवपादारविन्दार्चनेन योगेन भगवत्कर्मणा भगवान् प्रीयतां वासुदेव इति योगं भगवते समर्पयेत् ।

ततः पादौ प्रक्षाल्य संमृज्य द्विराचम्य शुचिः शुष्यत्पादास्यपाणिः सुवस्त्रधरः माधवं स्मरन् शयने संविश्य निद्रां कुर्यात् । स्वगृहेप्राकिछ्राः श्वशुरगृहे दक्षिणशिराः पथि प्रत्यक्छिराश्शयीत । कदाचिदप्युद-क्छिरा न शयीत । शून्यालये श्मशाने पथ्येकवृक्षे महादेवगृहे मातृवेश्मनि यक्षनागायतने चैत्यद्रुमे स्कन्दायतने गुल्मच्छयासु शर्करालोष्ट-पांसुषु भिन्नशयनेऽशुचिप्रदेशे धान्यगोदेवविप्राणां गुरूणाञ्चोपरि आकाशे दीक्षांविना दर्भासने च न स्वपेत् ।

नग्नोऽशुचिरार्द्रवासारुत्तरापरमस्तकश्च न स्वपेत् । विहितकालेषु स्त्रीसंभोगं यथावत्कुर्यात् । तदा यज्ञोपवीतं निवीतं पृष्ठभागे कृत्वा स्त्रीसंभोगकालधार्यं वासो धृत्वा स्त्रीसंभोगं कुर्यात् । स्त्रीणां षोडशरात्रयो ऋतुकालो भवति । तस्मिन्नृतुकाले चतस्रो रात्रीर्वर्जयित्वा युग्मासु संविशेत् । ययुग्मासु संविशेत् स्त्रीजननं भवेत् । पुंसः शुक्लाधिक्ये पुमान् । स्त्रियः शुक्लाधिक्ये स्त्री । समे पुमान् पुंस्त्रियौ नपुंसको वा भवेत् । अतः स्वयं स्निग्धं भोजनं कुर्यात् । स्त्री लघ्वाहारं कुर्यात् । ऋतुस्नातां भार्यां तातिवर्तेत ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

यावद्व्यवायं स्त्रिया सह शयीत । ततो न शयीत । शुक्लवस्त्रवेषधरया स्नातया शुद्धचित्तया ऽरोगया भार्ययासह स्वयञ्चैवंविधः संभोगं कुर्यात् । षष्ठ्यमा- पूर्णिमाचतुर्दश्यष्टमीव्यतीपातसङ्क्रान्त्युपवासदिनादिषु प्रतिषिद्धदिनेषु स्त्रीसंभोगं वर्जयेत् ।

ऋतौ गर्भशङ्कायास्सम्भवात् ऋतुकालाभिगामी स्नानं कुर्यात् । अनृतौ मूत्रपुरीषशौचसहपठितशौचमात्रं कृत्वाऽऽचामेत् । ततो यावन्निद्रा समभ्येति तावन्मनसा नारायणमनुस्मरेत् । निद्रान्तरेऽपि प्रबुद्धस्सन् भगवद्गुणानुवर्णनं कुर्यात् । एवं यथाधिकारं यथाविधि नित्यानि सर्वाणि आश्रमकर्माणि सर्वैराश्रमिभिर्यावज्जीवमनुष्ठेयानि ।

इति श्रीमद्रामानुजसिद्धान्तस्थापनाचार्य शतक्रतु चतुर्वेदि श्रीनिवासाचार्यविरचिते पञ्चकालक्रियादीपे योगनिरूपणाख्यः पञ्चमः परिच्छेदः

अनेकस्मृतिविज्ञेय कृत्याकृत्यप्रकाशकम् ।
पञ्चकालक्रियादीपमज्ञानध्वान्तरोधकम् ॥

शतक्रतुचतुर्वेदिश्रीनिवासार्यनिर्मितम् ।
सन्तस्समीक्ष्यसन्तोषं प्राप्नुवन्तु विमत्सराः ॥

॥ इति पञ्चकालक्रियादीपः सम्पूर्णः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# पञ्चकालक्रियादीपस्थश्लोकानामकाराद्यनुक्रमसूची






CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| | | | पृ. सं. | पंक्तिः |
|---|---|---|---|---|
| | **म** | | | |
| 196 | मधुपर्काख्य | ... | 133 | 15 |
| 197 | मन्त्रयोग: | ... | 110 | 4 |
| 198 | मन्त्रहीनं | ... | 140 | 9 |
| 199 | मन्त्रैःकल्पित | ... | 102 | 18 |
| 200 | मनोबुध्य | ... | 139 | 10 |
| 201 | ममापि | ... | 121 | 10 |
| 202 | मर्मभिन्महा | ... | 159 | 10 |
| 203 | माणिक्य | ... | 91 | 3 |
| 204 | माधवं | ... | 19 | 3 |
| 205 | मामनादृत्य | ... | 135 | 9 |
| 206 | मितसन्ध्य | ... | 153 | 4 |
| 207 | मुद्रैषा | ... | 107 | 13 |
| 208 | मूर्ध्निफालनेत्र | ... | 90 | 15 |
| 209 | मूर्ध्निफाले | ... | 97 | 14 |
| 210 | मृष्टमेध्य | ... | 133 | 1 |
| 211 | मेदोरक्तास्थि | ... | 4 | 14 |
| 212 | मोदकानि | ... | 135 | 3 |
| 213 | मोक्षैकहेतोः | ... | 67 | 6 |
| | **य** | | | |
| 214 | यएनं | ... | 33 | 2 |
| 215 | यज्ञदान | ... | 35 | 1 |
| 216 | यज्ञायुधानि | ... | 59 | 6 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# வேண்டுகோள்

கருணையுள்ளங்கொண்ட நம் முன்னோர்கள், அரிய பெரிய இலக்கியங்களையும், பிறவற்றையும், பனையோலைகளில் எழுதிச் சுவடிகளாக நமக்குத் தந்தனர். அவைகள், பல்வேறு இடங்களில் உள்ளன. அவைகள் பழுதடைவதற்குமுன் எம்மிடம் அன்பளிப்பாகக் கொடுத்துதவினால், அவைகள் மக்களுக்குப் பயன்படும்.

எம்மிடம் கொடுப்பதன் மூலம், சுவடி தந்தவர்களும் சுவடி எழுதியோரும் அழியாப் புகழை, எமது சுரசுவதி மகால் உள்ளளவும் பெறுவர். அவை பதிப்பாக வருமாயின், சுவடி தந்தார் பெயரும் இடம் பெறுவதோடு, அப்பதிப்பில் 5 பிரதிகளும் பெறுவர்.

எனவே, “நாம் பெற்ற பேறு பெறுக இவ்வையகம்” என்ற எண்ணமுடைய நற்பண்பாளர்கள் தம்மிடமுள்ள சுவடிகளை எமது மகாலுக்குத் தந்துதவ வேண்டுகிறோம்.

இங்ஙனம்,

*தஞ்சாவூர்,*
*4—10—80.*

**துரை. சுந்தரேசன்,** I. A. S.,
*மாவட்ட ஆட்சியர் & தலைவர்,*
*நிர்வாகக் குழு, சரசுவதி மகால் நூலகம்.*

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

॥ श्रीः ॥

# शोधनिका

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| इकि | इति | ... | 4 | 9 |
| पद्मपत्र | पद्मपत्र | ... | 5 | 10 |
| भगवत्पीत्यर्थेन | भगवत्प्रीत्यर्थेन | ... | ,, | 18 |
| पीतं | प्रीतं | ... | 6 | 8 |
| दलायै | दत्तायै | ... | ,, | 14 |
| घूणास्ये | घ्राणास्ये | ... | 7 | 4 |
| चापश्यन्न | चापश्यन्न | ... | 7 | 6 |
| वेगन्धारये | वेगं धारये | ... | ,, | 11 |
| न्नोपरुद्धः | न्नोपरुद्धः | ... | ,, | 12 |
| मृदं | गुदं | ... | 8 | 4 |
| द्विगृणं | द्विगुणं | ... | ,, | 14 |
| चोद्दक्षिणा | चेद्दक्षिणा | ... | 9 | 6 |
| रधस्वा | रधस्ता | ... | ,, | 14 |
| मृदश्शुद्धि | मृदाशुद्धि | ... | 10 | 6 |
| मृद्धारै | मृद्धारैं | ... | 11 | 4 |
| यस्यांचित्सौख्या | यस्यां कस्यांचित्संख्या | ... | ,, | 8 |
| स्पर्शपीडा | अर्शःपीडा | ... | ,, | 10 |
| कव्ट | कण्ट | ... | 14 | 13 |
| नावरणेन | नावारणेन | ... | ,, | 14 |
| उदङ्मुख | विदिङ्मुख | ... | 15 | 6 |
| स्सान्व | स्सन्त्वि | ... | ,, | 18 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| क्रूययिति | क्रूरमिति | ... | 15 | 20 |
| अन्याशना | अत्याशना | ... | 16 | 1 |
| गच्छ ब्रह्म | गच्छेत् ब्रह्म | ... | ,, | ,, |
| चार्थाद्धा | चाभीद्धा | ... | ,, | 17 |
| ऋजूसि | ऋजूनि | ... | 18 | 19 |
| मधोदरे | मथोदरे | ... | 19 | 3 |
| सव्यवाहके | सव्यबाहुके | ... | ,, | 10 |
| तिसृभर्मिर्जनं | तिसृभिर्मार्जनं | ... | 20 | 20 |
| प्रथ्वींतर्पयामि। ईशानां | प्रभ्वीं तर्पयामि, सत्यां तर्पयामि | ... | 23 | 6 |
| प्रतहरणं | प्रहरणं | ... | 24 | 11 |
| परिहार | परीवाह | ... | 26 | 18 |
| ससूत्र | स्वसूत्र | ... | 27 | 13 |
| तत्रैवा | तथैवा | ... | 28 | 11 |
| मशवतया | मशक्यतया | ... | 29 | 10 |
| इत्यादि हिंसा | इत्यादि श्रुतिभिः हिंसा | ... | 30 | 9 |
| दुःखतोऽपि | दुःखदोऽपि | ... | 31 | 15 |
| पशुस्कया | पशुस्त्वया | ... | 32 | 2 |
| परेन | परेण | ... | ,, | 6 |
| भागाः | भोगाः | ... | 34 | 4 |
| क्षया | भया | ... | 35 | 8 |
| वातवती | व्रातपती | ... | 36 | 12 |
| सङ्गच्छसे | सङ्गच्छते | ... | 37 | 11 |
| रर्धपञ्चक | रर्थपञ्चक | ... | 38 | 15 |
| हीक्षयित्वा | दीक्षयित्वा | ... | 38 | 21 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| यद्यदोरितम् | यद्यु दीरितम् | ... | 40 | 9 |
| न्यसेद्द्वेक्तामहीः | न्यस्येद्द्वेतुतामभीः | ... | 41 | 3 |
| महाकृत्वादीनां | महाकृत्वादिनाम | ... | 45 | 18 |
| पतित्वौक्तेः | पतित्वोक्तेः | ... | 47 | 7 |
| नेवक्सु | नैत्रक्ष्ंु | ... | 48 | 4 |
| स्यात्मानि | स्यात्मनि | ... | ,, | 7 |
| चित्तिस्तुगि | चित्तिस्रु गि | ... | 49 | 13 |
| सुवस्तार | स्वस्तरुस्तार | ... | 50 | 10 |
| यजमान | याजमान | ... | 51 | 2 |
| मत्र | मन्त्र | ... | 52 | 5 |
| मत्र | मन्त्र | ... | ,, | 6 |
| वादेव्या | वाग्देव्या | ... | ,, | 10 |
| सामोपनिषद्धः | सामोपनिषद्भिः | ... | ,, | 11 |
| सव्यं | सर्वं | ... | 52 | 13 |
| दिन्य | दित्य | ... | ,, | 15 |
| तृप्यत्वमिति | तृप्यतु इति | ... | 53 | 21 |
| शुङ्गं | शृङ्गं | ... | 55 | 7 |
| अवाहन | आवाहन | ... | ,, | 15 |
| विस्तिारं | विस्तारं | ... | 57 | 3 |
| परमात्मानं | परात्मान | ... | 60 | 11 |
| रुद्रादिदेवैः | रुद्रादिभिर्देवैः | ... | ,, | 15 |
| समवेद | सामवेद | ... | 63 | 5 |
| मन्त्रणपो | मन्त्रजपो | ... | ,, | 19 |
| तदेतावदेव | ततोदेवगृहमागत्य दूरादेव | ... | 65 | 2 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| न्तन्थितं | न्तस्थितं | ... | ,, | 10 |
| पन्त्रं | पत्रं | ... | 67 | 8 |
| प्रसिद | प्रसीद | ... | ,, | 9 |
| निर्मन्थ | निर्गन्ध | ... | 67 | 19 |
| युत्पलं | मुत्पलं | ... | 68 | 6 |
| मपक्रमते | मुपक्रमते | ... | 70 | 9 |
| सःतर्प्य | सन्तर्प्य | ... | 71 | 3 |
| केशवद्यूर्ध्वं | केशवाद्यूर्ध्वं | ... | ,, | 3 |
| द्रिद्रिव | द्वि | ... | ,, | 16 |
| पुनात्वि | पुनन्त्वि | ... | ,, | 17 |
| सन्दधन्त | सन्दधत्त | ... | 72 | 15 |
| निच्छिद्रादिते | निच्छिद्राच्छादिते | ... | 73 | 3 |
| जं | छं | ... | 74 | 10 |
| चक्षुर्थ्या | चक्षुर्भ्या | ... | 77 | 19 |
| देवं | देहं | ... | 78 | 9 |
| शिरसे। | शिरसेस्वाहा | ... | ,, | 17 |
| मत्युच्छ | मत्युच्च | ... | 80 | 14 |
| नाभो | नाभौ | ... | 82 | 11 |
| क्रियमाणैः | क्रियमाणं | ... | 83 | 2 |
| निषण्ण्यास्वार्थे | निषभ्यासार्थे | ... | 85 | 9 |
| पादयोः | पार्श्वयोः | ... | 87 | 22 |
| स्थातेषु | स्थानेषु | ... | 88 | 8 |
| मूर्व्यो | मूर्वो | ... | 89 | 4 |
| चनुर्विंशति | चतुर्विंशति | ... | 90 | 11 |
| चक्राम्भोरुह | चक्राम्बुरुह | ... | 92 | 5 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| स्थिति | स्थिति | ... | 93 | 10 |
| हस्थे | हस्ते | ... | 94 | 2 |
| गात्री | गायत्री | ... | 96 | 2 |
| कर्णे | कण्ठे | ... | 97 | 16 |
| भौंगै | भोंगै | ... | 102 | 12 |
| सत्कुक्षये | सन्तुष्टये | ... | 103 | 3 |
| सत्कुक्षये | सन्तुष्टये | ... | ,, | 7 |
| स्त्रीं | श्रीं | ... | 104 | 13 |
| पार्श्वादा | प्रागा | ... | ,, | 16 |
| हृदियन्त्रं | ह्लादयन्तं | ... | 105 | 14 |
| विन्चित्य | विचिन्त्य | ... | ,, | 16 |
| अक्षयं | अभयं | ... | 106 | 10 |
| नोपविष्टां | सूपाविष्टां | ... | ,, | 11 |
| मलाक्षं | मलायताक्षं | ... | 110 | 13 |
| प्रमाण | प्रणाम | ... | 114 | 15 |
| विधाने | विधारणेक्कृत्वा | ... | ,, | 19 |
| तदभ्यः | तदपः | ... | 120 | 18 |
| गगवन्तं | भगवन्तं | ... | 122 | 19 |
| पाद्मं | पाद्यं | ... | 123 | 3 |
| चब्दन | चन्दन | ... | 123 | 15 |
| प्रक्षाल्त्य | प्रक्षाल्य | ... | 126 | 4 |
| आलोपनं | आलेपनं | ... | 127 | 9 |
| कसूरिकां | कस्तूरिकां | ... | ,, | 9 |
| गन्या | गायत्र्या | ... | 128 | 9 |
| गति | गीत | ... | ,, | 13 |

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

| अशुद्धम् | शुद्धम् | | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|---|
| गुठान्नं | गुडान्नं | ··· | 134 | 21 |
| हन्त | दन्त | ··· | 141 | 5 |
| भूपण | भूषण | ··· | 142 | 21 |
| प्रत्शुपचारं | प्रत्युपचारं | ··· | 143 | 5 |
| अधार | आधार | ··· | 144 | 13 |
| उतर | उत्तर | ··· | 145 | 2 |
| मनोविशिष्टं | मनोवदनविशिष्टं | ··· | 146 | 3 |
| व्यञ्चनेर्युतं | व्यञ्जनैर्युतं | ··· | 147 | 11 |
| इणि | इति | ··· | 148 | 19 |
| भनवन्तं | भगवन्तं | ··· | 151 | 6 |
| नसूयिभि | नसूयुभि | ··· | ,, | 13 |
| श्रवैकुण्ठ | श्रीवैकुण्ठ | ··· | 157 | 10 |
| गर्भवस | गर्भवास | ··· | 158 | 15 |
| भगन्नाराणः | भगवन्नारायणः | ··· | 162 | 17 |
| शब्ज | शब्द | ··· | 163 | 5 |
| मनुष्ठेयानि | मनुष्ठेयानि | ··· | 164 | 10 |

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ......6466..........

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

